# प्रश्नोत्तरमाला



मद्रमण्डल दक्षिणपश्चिमविभागस्थ संस्कृतकलाशालाप्रत्यवेक्षकेण

अभिनवभट्टबाणेन

रायंपेट्टै - चक्रवर्ति - कृष्णमाचार्येण

विद्याशाखाध्यक्षादेशेन संग्रथिता

मद्रमण्डलराजकीयमुद्रालयप्रत्यवेक्षकेण मुद्रापिता.

१९१६.

## ॥ भूमिका ॥

अखिलविद्याविलाससदनेऽस्मिन्भारते चिराय खलु समुत्कर्षः समुपलक्ष्यते भगवत्या गैर्वाण्या वाण्याः । शास्त्रात्मकं काव्यरूपमितरद्वापि सर्वमपि वाङ्मयमासेतुशीताचलमखण्डेऽपि भारतखण्डे पठनपाठनादिषु प्रायेण समानरीतिमेव संवर्धितमवलोकयामः ॥

प्राचीनमहत्तरैश्च भारतीयैः पण्डितमणिभिर्न खलु नाम विमर्शसरणिर्नादृता, न वा न प्रदर्शिता । अथापि भूयसा तावदध्ययनाध्यापनसंप्रदायः संकुचितेनैव पथा संचरमाणो नातीव विमर्शवैभवफलमनुभवतीति नन्वस्माकमनुदिनमिदमनुभवपुनरुक्तमखिलानाम् । अतश्च प्राचीं पद्धतिमपरिहाय, पाश्चात्त्यां सरणिमप्यत्रलम्ब्य, आत्मनैवालोचनापथगामी सहृदयहृदयरञ्जनः कश्चन विषयविमर्शसंप्रदायः संप्रति दिशा संदर्शनीयः समापतितः ॥

तदिदमालोच्य मद्रमण्डलसंस्कृतकलाशालापरिशोधकमहाशयेन तादृशस्य नूतनस्य कस्यापि संप्रति परिमितपरिणाहस्य प्रबन्धस्य संग्रथनाय समादिष्टोऽस्मि; येन संस्कृतविद्यापक्षपातिनां हृदयमवरतोऽप्याराधितं भविष्यति । तमादेशं शिरसा प्रतिगृह्य, यावन्मतिबलं यावद्विमर्शकलमात्मनाहमेनं प्रश्नोत्तरमालाभिधानं नवीनं प्राबध्नां प्रबन्धम् ॥

अत्र च बहवः प्रमादा आपतेयुरित्यहमेव जानामि । संस्कृतसाहित्यकलायां च नूतना विमर्शसरणिर्न परिपोषमात्यन्तिकमधिगतेति सहृदया जानन्ति । अतश्च कियान्वापि यदि गैर्वाणीप्रणयिनामेनेन ग्रन्थेन प्रयोजनानुभवो भविष्यति, नूनं मे फलितं परिश्रमेणेति दृढं मन्यमानः प्रतीक्षे भावुकानामत्र पक्षपातमक्षीणम् ॥

मद्रनगरम्,
4-4-16.

रायंपेट्टै - चक्रवर्ति - कृष्णमाचार्यः,
संस्कृतकलाशालोपपरिशोधकः.

## ॥ विषयसूचिका ॥

# नागरलिपिः.

---

लिपिर्नाम तत्तद्वर्णप्रतिपत्तिहेतुश्चित्रसिंहादिस्थानीयः कश्चन रेखाविन्यासविशेषः । अहः, सा चेयं रेखारूपा लिपिः कियदुपकरोति लोकस्य? अहो अतिमहत्खल्वस्या विश्वविख्यातं वैभवम् । नियतमेनां विना परिष्कृतलोकस्य व्यवहारकथैवोच्छिद्येतेत्युक्तिर्न खलु सत्यवादसरणिमतिवर्तते । कलाशालां प्रविशन् बालोऽपि किल प्रतिपद्यते—न केवलं वागगणमेवास्य वैदेशिकेन सह व्यवहारव्यतिकरो विहायैनामन्येन केनचिल्लघुना गुरुणाप्युपायेन शक्यसंपादनो भवतीति । सा चेयं बहुरूपा भवति; यतो देशा अनेके, भाषाश्च भूयस्यः । अतस्तत्तदनुगुणान् भूमिकाभेदान्परिगृह्णाना नियमेनेयमप्यात्मना भिद्यते । यथा आन्ध्रदेशः, द्रविडदेशः, केरलदेशः, कर्णाटकदेशः, वङ्गदेशः, गुर्जरदेश इति देशान् सुबहूनुपलभामहे, तथा आन्ध्रलिपिः, द्रविडलिपिः, केरललिपिः, कर्णाटकलिपिः, वङ्गलिपिः, गुर्जरलिपिरिति लिपीरपि नानारूपाः प्रतिपद्यामहे । भाषादिभेदेन बहुप्रकारा चेयं लिपिस्तत्तद्देशभाषापदस्वरूपावगमाय यथा तत्तद्देशे उपयुज्यते, तथैव संस्कृतपदस्वरूपज्ञानायापि तामेनां तत्र तत्र देशे उपयुज्यमानां पश्यामः । दृश्यते हि आन्ध्रकर्णाटककेरलेषु भाषापदानिमित्तामिव भगवतीं गैर्वाणीमुपासितुमप्यविशेषेण तत्तद्देशलिपीनां विनियोगः । द्रविडेषु तु द्रविडलिपेर्विभिन्नाम् आकारादिभिर्भूयसा तत्तद्देशीय 'ग्रन्थलिपिः' इति व्यवह्रियमाणामन्यामेव कामपि लिपिमुपयुञ्जते संस्कृतशब्दस्वरूपप्रतिपत्तये । आन्ध्रकर्णाटककेरलभाषास्तु वस्तुतो द्रविडजातीया अपि स्वसौभाग्यात् भूयसा गीर्वाणवाणीप्रणयिन्यो भूत्वा तदीयामक्षरमातृकां स्वयमपि परिजगृहुः । अत एव विभिन्नाया लिपिपङ्क्तेर्नासीदावश्यकता । द्राविडी तु भाषा सर्वतोमुखमात्मनो वैलक्षण्यमभिदर्शयन्ती, अनन्यभवनाभिमानमुद्वहन्ती, असंपूर्णावयवाप्यपरप्रणेयतामिव परिहर्तुकामा वर्गेषु प्रथमपञ्चमावेव परिगृह्णती, ससंकोचममरभारतीमुपास्य तत्प्रसादलब्धान्यपि पदान्यात्मानुगुणतया खञ्जयन्ती, किंचिदिव स्वातन्त्र्यमभिरक्षितुमाचेष्टमाना न गैर्वाण्यक्षरमातृकामद्यापि स्पृशतीति तत एव द्रविडेषु गैर्वाणीकृते ग्रन्थलिपेरवतारः स्यादिति संभावयामः । एवमालोच्यमाने दक्षिणे भारतस्य खण्डे गैर्वाणी-

निमित्तमखिलैरप्यैककण्ठ्येन स्वीक्रियमाणा लिपिर्न कापि भवतीति स्पष्टमवगम्यते । उत्तरे तु भारतस्य भागे हिन्दुस्थानभाषावर्जमन्यत्र प्रायेण देशभाषाविषये गीर्वाणवाणीनिमित्ते च नागरलिपिः, तदीयं रूपान्तरं वा समुपयुज्यत इति शृणुमः । हिन्दीमहाराष्ट्रभाषादिषु च नन्वियमविकृतैव नागरलिपिरुपयुज्यते । गूर्जरास्तु शिरोरेखया नागरलिपिमभूषयन्तस्तामेनामात्मीयामभिमन्वते । वङ्गलिपिरपि क्वचित्पष्टम्, क्वचन क्षीणम्, एकत्र वक्रम्, अपरत्र ऋजु, अन्यत्र तिर्यक्च नागरलिपे रूपान्तरमिति तद्दर्शनादेवाध्यवसातुं शक्यते । उत्कललिपिरपि श्मश्रुलमस्याः संकटं किमपि भूमिकान्तरमिति जानन्त्येव चक्षुष्मन्तः । इत्थमखिलमपि भारतोत्तरखण्डमभिव्याप्य वर्तमानाया नागरलिपेर्दक्षिणेऽपि भारतभागे न खलु नाम विरलः प्रचारः । तथा किल दाक्षिणात्यानां दाक्षिण्यं नाम, यथैते स्वदेशलिपीर्मनसाप्यचिन्तयन्त उत्तरभारतस्य प्रधानतमां नागरलिपिमतिथिपूजं पूजयन्ति । उत्तरस्माद्भारताद्दाक्षिणं खण्डमाक्रामद्भिरार्यैः सहवासपरिचयवशाद्विरहविनोदचिह्नतया तामेनां नागरलिपिं गृहीत्वैवोद्धृतमिति तु चरित्रविमर्शका विश्वसन्ति । इयमेव नागरलिपिः पूर्वं गीर्वाणभाषानिमित्तमुपयुज्यमाना बभूव । अत एव भाषाया देवभाषापदेनेव, लिपेरपि देवनागरलिपिशब्देन व्यपदेशः श्रूयते । भाषायाः संस्कारं संस्कृतशब्दो यथा प्रकाशयति; तथैव लिपेरपि परिष्कारं नागरपदमवबोधयति । किं बहुना -- राजकीयैः परिगृहीतेयं लिपिः प्रतिदिनं प्ररोहन्ती यं नाम न स्पृशति, दृढं वदामः, न खलु तादृशः कोणोऽपि सुलभो भूखण्डस्य । एतत्सर्वमालोच्यैव एकलिपिविस्तारपरिषदप्येनामेव लिपिमखिलभारतलिपितया प्रचारयितुमतितरां प्रयस्यति । तादृश्या अस्या नागरलिपेः क्वचित्क्वचिद्देशभेदेन परिदृश्यमानमल्पाल्पं रूपभेदं प्रथमतः प्रदर्श्य, परस्तात् तल्लेखनशैलीमालोचयामः ।

उत्तरभारते च प्राधान्येन महाराष्ट्रादिषु वङ्गादिषु च मिथो भिन्नस्वरूपाः कतिपयवर्णानां रेखाविन्यासाः संदृश्यन्ते । अयमेव विन्यासभेदो रुचिविशेषानुरोधेन सौकर्यानुसारेण च दक्षिणेऽपि भारते लेखनादिषु तैस्तैः परिगृह्यते । मोहमयी (Bombay) प्रभृतिषु हि स्थलेषु परिगृह्यमाणानाम् अ, आ, झ, ण, क्ष, इत्येतद्वर्णसूचकरेखाविन्यासानां स्थाने कालीघट्ट-

(Calcutta) प्रमुखेषु प्रदेशेषु अ, आ, भ, ण, ल, इत्येवंजातीयका रेखा विन्यस्यन्ते। वाराणस्यादिषु च पूर्वं कालीघट्टरीतिसमाश्रयणं मुद्रणादिष्वासीत्। संप्रति तु मोहमयीरीतिं परिष्कृतां मन्यमाना इव समाश्रयन्ति वाराणसेयाः। अत्र लेखनसौकर्यं समालोच्यमाने मोहमयीगमनिकैव समीचीनेति भाति। परं तु भलयोर्विषये कालीघट्टरीतिरेव लेखनशैघ्र्यमापादयिष्यतीत्यपि समयेऽस्मिन्नभिदध्मः। नागराक्षरलिखितप्राचीनपुस्तकसमुदायः परिशील्यमानश्चिरादेव उभयविधामपि रीतिं देशभेदादिहेतुं विनैव स्वीकृतामावेदयति।

संप्रति अक्षराणां लेखनशैलीमुपवर्ण्य, अनन्तरं पदवाक्यविलेखनसरणिं प्रदर्शयामः। एकैकस्याप्यक्षरस्य स्वरूपलेखने संप्रतिपन्नश्चिरानुवृत्तः कोऽपि सांप्रदायिकः क्रमो वर्तते। यस्य परिग्रहेण निर्मीयमाणा लिपिः कामपि सर्वावयवव्यापिनीं सुषमां स्फुरत्तां च स्वयमङ्गीकरोति। चित्रलेखनेऽपि पश्यामः किल कमपि क्रमविशेषम्। यद्यपि निपुणेन चित्रकरेण पादावारभ्य विपरीतं विलिख्यमानोऽपि न खलु नरो वानरो भवति, अथापि आ वदनादालिखित इव अतथाविधे चित्रनरे न खल्वखिलाङ्गव्यापिनी विभक्तावयवव्यङ्ग्या सौन्दर्यभङ्गी सहृदयैरनुभूयत इति नायमपलपनीयः कश्चिदर्थवादः। अत्रापि, प्रथमं का नाम रेखा कस्य वर्णस्य कथं विन्यसनीयेत्यमर्थः सांप्रदायिकमहत्तरलेखनशिक्षायामायतते। तूलिकायां द्वयोर्जिह्वयोः किंचिदिव तिरश्चीनेन पथा च्छेदः, तादृशतूलिकाधारणप्रकारश्च तेषामेव महत्तराणामुपदेशाधीनो भवति। तथा शिक्षणेन विलिख्यमानो हि रेखाविशेषः परस्परमसंकीर्णः किमप्यक्षरमभिव्यञ्जयन्नात्मनापि समुज्ज्वलो भवति। नागरलिपौ हि मध्यभागरेखा, शिरोरेखा, तदुपरिरेखा, अधोरेखा इति रेखाचतुष्टयं तत्तद्वर्णानुरोधेन भवति। सर्वत्रापि प्रथमतो मध्यभागरेखैव विलेखनीया, ततः शिरोरेखा, तदुपरिरेखा तु ततः पश्चात्। अधोरेखाया अप्यावश्यकतायां तु, मध्यरेखानन्तरमधोरेखा, ततः शिरोरेखेति संप्रदायविदः। मध्यभागरेखाणामनेकत्वे तु तत्रापि कश्चन क्रमो विद्यत इत्यनुभवेन जानीमः। वामभागरेखायाः प्रथममारम्भः, पश्चाद्दक्षिणरेखाया इति ह्यस्माकमनुभवः। दृश्यतामिदं सर्वमधो विलिखितेषु वर्णेषु—

# शुभं कर्तुं यतेत ।

अत्र 'शु' इत्यत्र 'श्' इति 'उ' इति च द्वौ वर्णौ संयुक्तौ । अत्र 'श' इति मध्यभागरेखा प्रथमतः, 'ु' इति अधोरेखा पश्चात्, तदनन्तरम् '—' इति शिरोरेखा च संप्रदायसिद्धेन क्रमेण विन्यस्यते । 'र्तुं' इत्यत्र च आदितः 'त' इति, परस्तात् 'ु' इति, पश्चात् '—' इति, अनन्तरम् 'ं' इति च क्रमेण मध्यमभागरेखा, अधोरेखा, शिरोरेखा, तदुपरिरेखा च तत्तद्वर्णाभिव्यञ्जनाय योजनीया भवति । 'क' इत्यत्र च वामभागरेखा 'व' इति, दक्षिणभागरेखा च '੭' इति पूर्वोक्तरीत्या पूर्वं पश्चाच्च विलिख्येते । एवं तत्तद्वर्णविषये रेखाविन्यासक्रमः संप्रदायानुसारेण ज्ञातव्यः, येन निष्पद्यमाना लिपिर्नयनहारिणी सांप्रदायिकी च भवति । इदमप्यत्र लेखनरहस्यम्—यदुत तत्तद्वर्णशिरोरेखाभिः परस्परमसंकीर्णाभिर्विश्लिष्टाभिश्च भाव्यमिति । बहवो हि संप्रत्येतत्तत्त्वमजानन्तः, प्रथमत एव कामपि दीर्घां शिरोरेखां विलिख्य, तदधस्तात् एकस्यां दीर्घरज्जौ अविच्छेदबद्धा इव तास्तत्तदक्षरराशिमायोज्य लेखनसंप्रदायं कलुषयन्तस्तानीमान्यक्षराण्यचक्षुष्याणि कुर्वन्ति । प्रायेण चायं लेखनशैल्याः कलुषीभाव आङ्गलकलाशालासु संस्कृतभाषाविद्यार्थिनामाजानसिद्धः परिदृश्यते । बालकैश्च अस्यामभिदर्शितायां लेखनसरणौ नितरां जागरूकैर्भाव्यम् ।

अथेदानीं वाक्यलेखनपद्धतिमधिकुर्मः । पूर्वं किल तालपत्रपुस्तके काकदमयपुस्तके वा विलेखनरीतिरतीव शोचनीया बभूव । मङ्गलश्लोकमारभ्य आप्रबन्धसमाप्ति एकमिव वाक्यमविच्छेदेन मिथः संश्लिष्टतमपाङ्क्तिकमतिसूक्ष्मतमाभिर्लिपिभिरभिज्ञानामपि स्वयं दुरवगाहया कयाचन शैल्या लिख्यत इति संप्रदाय आसीत् । तदानीं चाक्षरच्युतकमात्राच्युतकादीनां शास्त्रग्रन्थेष्वपि भूयसा साम्राज्यमवर्तत । पाठान्तरादीनामपि इयमेव लेखनरीतिः सर्वात्मना समभून्माता । व्याख्याभेदकोलाहलस्यापीयमेव मुख्यतमं निदानमासीदित्यपि संभाव्यते । एवमतिसंकट एव पुस्तकमध्ये विद्यार्थिनां गुरुभिरुपदिश्यमानोऽर्थष्टिप्पणीरूपतया विनिवेशनीयतामधिगतः; यः किल

कालेन ग्रन्थान्तर्भावं प्रापितो महते वादकोलाहलाय कल्पते स्म । इयं च दुरवस्था सर्वेष्वपि देशेषु सर्वास्वपि भाषास्वेकरूपैव पूर्वमासीत् । तदानीं हि गुरुमुखाच्चिरादधीतविद्येनापि केनचन विना स्वकीयमन्यदीये पुस्तके तत्तत्प्रकरणोद्धरणं वा, निरर्गलमर्थापनं वा नातीव सुशकमभूत् । शिलायन्त्रमुद्रणप्रकारोऽपि नैनां दुर्दशामतिक्रामति स्म । कालेन च गच्छता प्रतीच्यमुद्रणपरिष्कारानुरोधेनास्मदीयेषु मुद्रणप्रकारेषु परिष्क्रियमाणेषु, पदयोरन्तराले अवकाशदानेन उद्धरणविरामचिह्नादिविन्यासेन च क्लिष्टोऽपि ग्रन्थः सुखावसेयतामापादित इवावलोक्यते । इममेव मुद्रणसंस्कारप्रकारमवलम्ब्य, नव्यनागरकाः परिष्कृतेन मार्गेण लिखन्ति प्रबन्धान् । तत्र मुद्रणायामपि बहवः प्रकारभेदाः परिष्कारस्य लक्ष्यन्ते । ते च प्रदर्श्यमाना लेखनसरणावप्यतिदिश्यमानाः काममनायासेनावसेया भवन्ति । तत्र पदयोर्मध्ये कियानिवावकाशो देयः, यः 'स्पेस्' (space) इति शब्देन व्यवह्रियते प्रतीच्यमुद्रणारीतौ । यथा—'वारि वर्तते' इति । दृश्यतामत्र उभयोरपि पदयोर्मध्ये कियानिव अवकाशः । 'वनेन गतः' इत्यत्र 'वनेन गतः' इत्यर्थो वा, 'वने न गतः' इत्यर्थो वेति संशयस्थले पूर्वापरसंदर्भानालोचनायामपि अव्युत्पन्नानामपि वास्तवार्थनिर्णयः सुखेन भवत्येवं पदमध्ये अवकाशदानेन लेखन इत्यस्य सफलत्वमवगन्तव्यम् । अयं चावकाशो विच्छेदचिह्नतया स्वीकर्तुं शक्यते । संधौ तु क्रियमाणे नैनमवकाशमावश्यकं मन्यन्ते परिष्कारिणः कतिपये । यथा—'सरसिजमनुविद्धं शैवलेनापि रम्यम्' इति । अत्र सरसिजपदस्य अनुविद्धपदस्य, शैवलपदस्य अपिपदस्य च मध्ये न दीयते विच्छेदचिह्नमवकाशः । उत्वसंधौ यवरलोपसंधौ जिह्वामूलीयोपध्मानीययोस्तत्र विसर्गे च विच्छेदमेत एव संस्कर्तारो वाञ्छन्ति । यथा—'रामो जयति ।' 'अस्या मुखेन्दुना' 'गुरा उक्तः' 'गतभी रणेषु' 'कोकिलः कूजति' 'वरः फलति' इति । वलोपस्य तु नोदाहरणं पद्येषु दृश्यते । तत्र ह्येते वैकल्पिकं वलोपं नाभिनन्दन्ति । 'पुत्राविमौ पश्य' इत्येव ते पठन्ति, लिखन्ति च । केचित्तु—संधावपि विच्छेदचिह्नं पदयोरवकाशमभीप्सन्ति । मुद्रयन्ति चैवम्—'य त्त त्पदम् अनुत्तमम्' इति । इयं च रीतिः पूर्वं कैश्चिदाश्रितापि संप्रति प्रायेण प्रक्षीणकल्पैव संपन्ना । जिह्वामूलीयोपध्मानीयाभ्यां

सह विकल्पितं विसर्गमेव तादृशे स्थले नव्यनागरका लौकिकेषु प्रयोगेषु संघटयन्ति । यथा—उदाहृतयोः स्थलयोः ।

एवं शकारषकारसकारेभ्यः पूर्वं विद्यमानस्य विसर्गस्य सत्वं कृत्वा तत्र श्चुत्वष्टुत्वाभ्यां यथासंभवं शषयोर्द्वित्वं चापाद्य 'हरिश्शेते' 'कविष्षष्ठः' 'मुनिस्सारः' इति केचिन्मुद्रापयन्ति, लिखन्ति च । इयं च रीतिर्बाहुल्येन दक्षिणभारतीयलिपिमुद्रितेषु पुस्तकेषु समुपलभ्यते । वाराणसीकालीघट्टादिष्वपि पूर्वमियं गमनिका स्वीकृता बभूव । सांप्रतं तु तत्राप्यस्या रीतेर्ह्रासः संलक्ष्यते । यद्यपीयं रीतिर्न नाम न शास्त्रीया; तथापि तादृशेषु स्थलेषु 'वा शरि' इति सूत्रेण वैकल्पिकं विसर्गमेव संपाद्य, विच्छेदचिह्नमवकाशं च प्रदाय 'हरिः शेते' 'कविः षष्ठः' 'मुनिः सारः' इत्येवं रीत्या लेखनमेव रमणीयतरं संशयनिवर्तकतया समादरणीयं च ।

इतोऽप्याधिकमवधेयमाधेयं च कमपि परिष्कारमिदानीं वदामः; प्रायेण पण्डिता अपि यत्र सुदूरमुदासते, बहुत्र विपरियन्ति च । अनुस्वारस्य किल पदान्तभिन्नस्य यथि परसवर्णं नियतमनुशास्ति भगवान्पाणिनिः । पदान्तस्य तु तस्य परसवर्णकरणमैच्छिकमन्वाचष्टे । सत्यप्येवं शास्त्रीयसिद्धान्ते, शास्त्रज्ञा अपि भूयसा अनुस्वारस्य पदान्ते तरस्य परसवर्णमकृत्वैव विलिखन्ति, मुद्रापयन्ति च । यथा—'वंगाः, रंकुः' इति । इदमपि दूषणमाधिक्येन दाक्षिणभारतमेव स्पृशति । तथा अवसाने अनुस्वारलेखनमपि दाक्षिणात्यानां प्रमाद एव । यथा—'निःशेषविश्राणितकोशजातं' इति । न खलु उत्तरत्र हलं विना ईदृशेषु स्थलेषु मकारस्य केनापि सूत्रेणानुस्वारप्राप्तिर्विद्यते । व्याकरणान्तरे 'अनचि' इति सूत्रादवसानेऽप्यनुस्वारप्राप्तिरस्तीति वादिनस्तु मान्याः । केचित्तु पदान्तस्यापदान्तस्य चानुस्वारस्य परसवर्णं कुर्वाणा एवं लिखन्ति—'त्वङ्करोषि' 'अङ्कः' इति । तत्र पदान्तस्यानुस्वारस्य परसवर्णकरणम् 'वा पदान्तस्य' इति शास्त्रमनुसरतीति न तत्र प्रमादः । परं तु वैकल्पिकं परसवर्णं तादृशे स्थले अकृत्वा 'त्वं करोषि' इत्यादिरीत्या लेखनमेव नागरकाः सुन्दरं मन्वते । वैकल्पिकेष्वपि विधिषु भावानुष्ठानमेव अतिशयितधर्मजनकत्वेन आदरणीयमिति शाब्दिकसंप्रदायमेते नव्यपरिष्कारिणो न जानन्तीति पण्डितानां केषांचन शापाक्षरं तु नैतेषां नागरकाणां कर्णकुहरं प्रविशति; यत एते फलमुखतया तादृशीं

रीतिमातिष्ठन्ते । दाक्षिणात्यलिपिमुद्रितेषु पुस्तकेषु दाक्षिणात्यपण्डितानां लेखनसरणौ च पदान्तस्यानुस्वारस्य परसवर्णविधानम्, अपदान्तस्य तस्य तदकरणं च प्रतिनियतमिव प्रायेण परिदृश्यते ।

अथेदानीमवग्रहपरिग्रहं पर्यालोचयामः । यत्र 'एङः पदान्तादति' इति सूत्रस्य प्रवृत्तिः, तत्र संधावन्तर्गतोऽयमकार इति बोधयितुम् अवग्रहचिह्नं तिरश्चीं वक्ररेखां विनिवेशयन्ति परिष्कारिणः । यथा—'हनेऽपि भारे' 'सोऽनुव्रजतः' इति। इदं च अवग्रहचिह्नमिति लौकिकाः कथयन्ति । इद-मपि चिह्नं पदयोरसमस्तत्व एव, 'यशोवकाश' इत्यादिसमासे तु नाभि-लष्यते नव्यनागरकैः । केचित्तु इदं चिह्नम् अवर्णस्य संध्यन्तर्भावसूचकमिति मन्यमानाः, 'शौवलेनाऽपि' इत्यादावपि तदिदं निवेशयन्तः, आकारस्य संध्यन्तर्भावस्थले तस्य द्वित्वमाद्रियमाणाः, 'तस्याऽऽसीत्' इत्यादौ तद्द्वय-मुपयुञ्जते । अन्ये तु इदमच्संधिसामान्यसूचकमिति मत्वा, रेखामपि विलक्षणां स्वीकृत्य 'तस्यै~व' इत्यत्र, 'तत्रो~औ' इत्यत्र च तदेनाचिह्न-मुपयुञ्जते ।

सर्वोऽप्ययमभिहितपूर्वः परिष्कारः सुप्रसिद्धनिर्णयसागरमुद्रालयीय-पण्डितसमाजेन सदयमवतारित इति तत्र चिराय कृतज्ञतां धारयद्भिरस्माभि-रवश्यमियं परिष्कारपद्धतिरात्मानुवर्तनेन बहुमन्तव्या ।

संप्रति अवान्तरप्रकरणविभागकल्पनां विरामोद्धरणादिचिह्नानि च प्रकृत्य किंचिदभिधीयते । पद्यकाव्येषु प्रतिपद्यं विभागः (Paragraph) कल्पयितुं शक्यत इति न तत्रास्माकमतिमहान्भारः । गद्यकाव्यविषय एव कथं नाम तत्तदवान्तरप्रकरणविभागकल्पनं करणीयमित्यालोचनीयम् । प्रति-वाक्यं विभजनमङ्गीकृत्य पृथक्पृथक् स्थलदानेन लेखनं तु दुःशकमनवस्थितं च । अत एकतात्पर्यकस्य एकफलकस्य वा वाक्यसमुदायस्य, क्वचिदेकस्यापि वाक्यस्य अवान्तरविभजनपूर्वकं पृथक्पङ्क्तिकतया विनिवेशनं समञ्जसम् । तच्च नव्यनागरकमुद्रितबहुग्रन्थदर्शनेनैव व्युत्पादनीयमिति कथयन्ति । सर्व-स्यापि ग्रन्थस्यैकनायकविषयकतया ऐक्यम्, एकफलकतया भिन्नभिन्नयोरपि शास्त्रयोरभेदम्, साक्षात्परम्परया वा सर्वमपि वाङ्मयं सच्चिदानन्दलक्षणं ब्रह्मैव विषयीकरोतीत्येकतात्पर्यकतया एकफलकतया च सर्वासामपि वाचा-

मभिन्नतां चाकलयन्तः कतिपये पण्डिताः, नव्यनागरकस्त्रीकृते तत्तदवान्तरविषय विभागकल्पनाकल्पे अव्याप्त्यादिदोषसहस्राणि वर्षन्तस्तमेनं पक्षं नाभिनन्दन्ति। तत्र एकस्मिन्विभागे लिखितावसिते, अन्यस्यारम्भे अनन्तरोर्ध्वपङ्क्तेरधस्तात्किंयन्तमवकाशं प्रतिपङ्क्ति दीयमानादप्यधिकतया प्रदाय, ऊर्ध्वपङ्क्त्यपेक्षया किंचिदन्तः संकोच्यैव विलेखनसरणिरादर्तव्या। तदानीमेव विषयविभागकल्पनं झटिति प्रकाशेत। यथा —

अतिशयरूपाकृतिमनिमेषलोचनो ददर्श ॥

समुपजातविस्मयस्याभून्मनसि महीपतेः। अहो—

एवं विभागकल्पनासु प्रतिविभागं लेखनमङ्गीकार्यम्।

चिह्नानि च नागरकैरनेकधा स्वीक्रियन्ते। तत्र विरामचिह्नमेकम्। इदमेव च संपूर्तिचिह्नमित्यप्यभिधीयते। अस्य चाङ्गलभाषायाम् 'Full stop' इत्युच्यते नाम। दाक्षिणात्यलेखनसरणौ तु '.' इत्याकारको बिन्दुरेव संपूर्तिचिह्नतया भूयसा स्वीकृतो दृश्यते। नागराक्षरलेखनशैल्यां तु '।' इत्याकारिकाम् ऊर्ध्वाधःस्थितां दण्डाकारां रेखामुपयुज्यमानां पश्यामः। इदं च चिह्नं संपूर्णवाक्यावसानसूचकतया स्वीकुर्वन्ति। अत एवेदं संपूर्णविरामचिह्नमित्यपि केचन कथयन्ति। तत्तदवान्तरप्रबद्धकसमाप्तौ तु केचनैनामेव रेखां द्विर्लिखन्ति। विरतिचिह्नम् अथवा विरामचिह्नमित्यपरम्; यदेव 'Comma' इति पदेन भाषान्तरीयेण व्यपदिश्यते। यस्य चाकारः ',' इति रेखया प्रदर्श्यते। इदं च किंचिद्विरामसूचकतयोपयुज्यमानं तत्र तत्रान्वयादिगमनिकायां सुबहूपकरोति विद्यावताम्। अन्यच्चेदं प्रायःसंपूर्तिचिह्नम्; एतस्यैवाङ्गलभाषायाम् 'Semicolon' इति शब्देन व्यवहारः। इदं च संपूर्यमाणस्य वाक्यस्य किंचिदिव पुरस्ताद्विरामसूचकतयोपयुज्यते। ';' इति रेखा चास्य स्वरूपं प्रकाशयति। केचित्तु इमे उभे अपि पादविरामपदेन अर्धविरामपदेन च क्रमेण व्यपदिशन्ति। 'Hyphen' इति आङ्गलपदेन व्यवह्रियमाणम्, '-' इति रेखया प्रदर्श्यमानं चिह्नं तु पूर्वोत्तरयोरक्षरयोरविच्छेदं सूचयति। एकस्याः पङ्क्तेरवसाने कस्यचन पदस्य कतिपयेष्वक्षरेषु लिखितेषु, तत्पदीयानामक्षरान्तराणामन्यस्यां पङ्क्तौ विलेखनीयतायां पूर्वपङ्क्तेरन्ते इदं चिह्नमाधिक्येनोपयुज्यते। क्वचित् 'कृष्ण-पदम्' इत्यादौ पदयोरविच्छेदसूचनायापीदमुपयुञ्जते कतिपये। उद्धारचिह्नं

नामेदमपरम्। इदं च 'Quotation' इति आङ्गलभाषायां व्यवह्रियते। एतच्च अन्यदीयवाक्यान्युद्धृत्य विलेखनावसरे उपयुज्यते। तत्र आरम्भे '' ' इत्येवम्, समाप्तौ ' '' इत्येवं च रेखया प्रदर्श्यते। एतयोर्द्वित्वमपि केचिदभिपन्यन्ते। उद्धृतवाक्यमध्ये उद्धरणान्तरप्रसक्तौ प्रथमस्य द्वित्वम्, मध्यवर्तिनश्च तस्य चिह्नस्य एकत्वं रुचिरमिति नव्यविमर्शकाः। संपूर्णस्य सूत्रादेरुद्धारे पूर्वोक्ता रीतिराश्रयणीया। मध्ये विच्छेदे तु दीर्घां कामपि रेखामन्तर्घटयित्वा विलेखनं रुचिरतरम्। यथा—'जानपद—' इति सूत्रेण। यथा वा—'सर्वोऽप्ययं वेदान्त —' इति भाष्ये। उद्धृतपदस्य इतिना संधिं कृत्वा —'इमानि च तानी' ति भाष्येण—इत्येवं रेखाविन्यासः कैश्चिद्विरच्यमानस्तु नातीव हृदयंगमः। तत्रापि 'इमानि च तानि' इत्येवं भाष्येण इत्येव लेखनं समञ्जसम्। 'इत्यादिना' इति आदिशब्दप्रयोगे तु पूर्वोक्ताया दीर्घरेखाया नावश्यकतेति वदन्ति। यथा —'सर्वोऽप्ययं वेदान्त' इत्यादिभाष्ये—इति। अन्यच्चोपपादकं चिह्नं; यत् '—' इति रेखया प्रकाश्यते। 'Dash' इति पदेन च आङ्गलमुखेषु भाषान्तरेषु व्यपदिशन्ति तदेतच्चिह्नम्। इदं च पूर्वोत्तरयोरुपपाद्योपपादकभावप्रदर्शनस्थले पूर्वोक्तस्य प्रकारविशेषविवरणस्थले च भूयसा उपयुज्यते। यथा—'तथाहि —स किल' इति, उक्तं च—'नैनम्—' इति च। परं तु इयं रेखा बहुत्र उपयुज्यमाना न निर्वचनीयतां प्रतिपद्यते। अतश्च बहुश्रुतमुद्रितलिखितपुस्तकादिदर्शनेनैवास्य चिह्नस्योपयोगक्रमो ज्ञातव्यः। अन्यच्चेदम् अर्धकुण्डलाचिह्नम्। अस्य 'Bracket' इति आङ्गलभाषायां व्यवहारः। इदमपि क्वचिद्विवरणे क्वचन स्थाननिर्देशादिषु उपयुज्यमानमनन्तरूपमिति न खलु निर्वचनीयं भवति। आरम्भे '(' इति, अवसाने ')' इति च रेखाद्वयमस्य स्वरूपमवगमयति। सर्वाण्यपीमानि चिह्नानि यद्यपि आङ्गलादिभाषास्वेव चिराय रूढमूलानि। तथापि अर्थावबोधनसौकर्यसंपादकतया अबाधकतया च नव्यशिक्षकैरस्मदीयभाषालेखनशैल्यामप्युपयुज्यमानानि क्रमेण सर्वसंमान्यतापदमारोक्ष्यन्तीति प्रतिभाति।

## प्रथमशाखायां प्रथमकक्ष्या ।

### अमरः, शब्दमञ्जरी च ।

प्र—शिवस्य, सूर्यस्य, जलस्य, शैलस्य च चत्वारि नामानि लिखत ।

उ—शंभुः, पशुपतिः, भूतेशः, धूर्जटिः, इति शिवस्य,
भास्करः, दिवाकरः, मार्तण्डः, ग्रहपतिः, इति सूर्यस्य,
आपः, सलिलम्, उदकम्, पानीयम्, इति जलस्य,
पर्वतः, अद्रिः, गिरिः, अचलः, इति शैलस्य च नामानि ।

प्र—सुब्रह्मण्यस्य, इन्द्रस्य, कुबेरस्य च वाहनानि कानि?

उ—मयूरः, मेघः, नरश्च क्रमेण तेषां वाहनानि ।

प्र—इन्द्रपुत्रस्य, कुबेरोद्यानस्य, शिवधनुषश्च नामधेयं किम्?

उ—जयन्त इति इन्द्रपुत्रस्य, चैत्ररथमिति कुबेरोद्यानस्य, पिनाक इति शिवधनुषश्च नाम ।

प्र—कति ऋतवः? अमरोक्तक्रमेण तान् नाम्ना निर्दिशत ।

उ—ऋतवः षट् । हेमन्तः, शिशिरः, वसन्तः, ग्रीष्मः, वर्षाः, शरत्, इति ते भवन्ति ।

प्र—अमरकोशान्नावमधिकृत्य किं जानीथ?

उ—अमरसिंहकाले बाष्पनौका वा, युद्धनौका वा, आसीदित्यनुमातुं न शक्यते । तरिरिति, उडुपमिति च द्वेधैव नौरासीदित्यवगम्यते । नावश्च कर्णधारेण क्षेपण्या अरित्रेण च देशाद्देशान्तरमनीयन्त । तासु मलापनयनाय अभ्रयः, जलापनयनाय सेकपात्राणि, इष्टप्रदेशगमनानुकूलवातसंग्रहाय कूपकाश्चासन् । पोतवाहा अपि सज्जा वर्तन्ते स्म । सांयात्रिकाश्च आतरं दत्त्वा वाणिज्यार्थमभिलषितान् देशान् जग्मुः ।

प्र—अमरकोशपठनेन देवानधिकृत्य यत् ज्ञायते, तत्कथारूपेण संगृह्य लिखत ।

उ—देवा नाम दिव्यशरीरभाजः । एतेषां जरा, मरणम्, स्वापश्च नास्ति । बाल्यम्, कौमारम्, यौवनमिति तिस्र एव दशा एतेषाम् । एषां च वासः स्वर्गलोके । अन्नं चैतेषाममृतमेव । क्रतुषु चैते हूयमानं हविरग्निसाह्येन

भुञ्जते । लोकोपकार एवैनेषां शुभा चित्तवृत्तिः प्रवर्तते । निग्रहानुग्रहसमर्था चैनेषां वाणी । दनुसुता दानवाः, दितिपुत्रा दैत्याश्चैतेषामरयः ।

प्र---शतसंख्यायां सत्यां किं वचनमुपयोक्तव्यम्?

उ—बहुवचनमेव। त्रित्वसंख्यामारभ्य सर्वास्वपि संख्यासु बहुवचनमेव भवति ।

प्र—भ्याम्, भ्यः, इति प्रत्ययौ कुत्र कुत्र वर्तेते?

उ—तृतीयाचतुर्थीपञ्चमीनां द्विवचनप्रयोगे भ्यामिति, चतुर्थीपञ्चम्योर्बहुवचनप्रयोगे भ्य इति च श्रूयते ।

प्र—धातृपितृशब्दयोः, मातृपितृशब्दयोश्च रूपे भेदः कुत्र?

उ— धाता, धातारौ, धातारः, इति तकारादकारो दीर्घः । पिता, पितरौ, पितरः, इत्यत्र तकारादकारो ह्रस्वः । अयमेव तयोर्भेदः । मातृपितृशब्दयोस्तु— द्वितीयाबहुवचने पितन् इति, मातृः इति रूपे भेदः ।

प्र—धातृशब्दतुल्यम्, पितृशब्दसमं च शब्दद्वयं लिखत।

उ—हर्तृकर्तृशब्दौ धातृशब्दसदृशौ, जामातृभ्रातृशब्दौ पितृशब्दसमानौ रूपे भवतः ।

प्र—उशनःशब्दस्य संबुद्धौ कति रूपाणि? तानि च कानि?

उ—त्रीणि रूपाणि—हे उशनन्, उशन, उशनः, इति ।

प्र—के शब्दास्त्रिष्वपि लिङ्गेषु सरूपा भवन्ति?

उ—युष्मदस्मच्छब्दौ, कतिशब्दः, पञ्चन् षट् सप्तन् अष्टन् नवन् दशन् शब्दाश्च त्रिषु सरूपा भवन्ति ।

---

## प्रथमशाखायां द्वितीयकक्ष्या ।

### कथाकुसुममञ्जरी ।

प्र—श्रीरामभद्रचरितपरिशीलनेन के नाम सद्गुणा ज्ञातुं शक्यन्ते?

उ—मातापित्रोर्वचनमवश्यं परिपालनीयम्, सहोदरेषु स्नेहः सर्वथा प्रदर्शनीयः, सापराधस्यापि शरणागतस्य परित्राणमवश्यं करणीयम्, सति

समये दुष्टनिग्रहो नियतमाचरणीयः, दुर्वृत्तस्य सर्वात्मनाप्युदर्को विनाश एव, प्रजाराधनं नाम भूमिपतेः प्रधानभूतो धर्मः, महात्मना तत्त्ववेदिनापि बुद्धिमता लोकापवादादवश्यं भेतव्यमित्यादयो गुणा अवगम्यन्ते ।

प्र—नलचरित्रपठनेन ज्ञायमानान्गुणान्विलिखत ।

उ—महत्यपि कर्मणि तिरश्चामपि साहायकं फलाय कल्पते, अनुरूपे वस्तुनि मनःप्रवृत्तिरखिलैरप्यभिनन्दनीया भवति, देवानामपि विषयाभिलाषो दुर्जय एव, स्वाभिलषितेऽपि वस्तुनि परेषां प्रार्थनामङ्गीकुर्वाणेन तदानुकूल्यसंपादनाय स्वार्थनिरपेक्षः प्रयत्न आस्थेयः, दैवतानुग्रहः सर्वाभीष्टसाधको भवति, अक्षक्रीडा नियतमनर्थपरंपरां जनयति, स्वयमापन्नेनाप्यपरो विपन्नः परिपालनीयः, प्रभुणापि कालवशाद्दास्यवृत्तिरनुसरणीया, पातिव्रत्यं नाम स्त्रीणां परमं तेजः, सर्वथाप्यन्ते धर्म एव स्वयं रक्षितो रक्षति पुरुषमित्यादीन् महतो गुणानवगच्छामः ।

---

प्रथमशाखायां

रामायणम् ।

प्र—"संक्षेपरामायणम्" इत्यस्यार्थः कः ?

उ—रामस्य + अयनम् = रामायणम्—रामचरितमिति तदर्थः । रामः अय्यते प्राप्यते अनेनेति रामायणमिति केचित् । रामः अयनं प्रतिपाद्यो विषयो यस्य तत् रामायणमित्येके । संक्षेपेण युक्तं कथितं वा रामायणं संक्षेपरामायणम् । शब्दसंग्रहेण प्रधानकथाभागपरित्यागं विना श्रीरामचरितप्रतिपादकः प्रथमः सर्गः संक्षेपरामायणमित्युच्यते ।

प्र—रामायणपठने किं फलमुक्तं महर्षिणा ?

उ—"एतदाख्यानमायुष्यं पठन्रामायणं नरः ।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥

पठन्द्विजो वागृषभत्वमीयात्स्यात्क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात् ॥"

इति फलं वदति वाल्मीकिः ।

प्र—कैकेय्या वृतो वरः कः?

उ—"पूर्वं दत्तवरा देवी वरमेनमयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥"

प्र—लक्ष्मणो रामम्, शत्रुघ्नो भरतं चानुवर्तत इत्यत्र को हेतुः?

उ—दशरथः कौसल्यया कैकेय्या च पायसभागं सुमित्रायै अदापयत्। अतस्तन्महिम्ना समुत्पन्नौ लक्ष्मणशत्रुघ्नौ क्रमेण रामभरतावन्वासाते ।

तथा च पाद्मे—
"युगं बभूवतुस्तत्र सुस्निग्धौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ पायसांशवशात्स्वतः ॥" इति ।

प्र—श्रीरामसंबन्धिषु गुणेषु युष्माकमभिमतान् मुख्यतमान् पञ्च गुणान् लिखत ।

उ—सत्यधर्मपरायणत्वम्, कृतज्ञता, विजितेन्द्रियत्वम्, प्रजापालनतत्त्वज्ञता, सार्थकोपप्रसादता ।

प्र—"भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ ।"
अत्रोपमानोपमेयभावं विशदयत ।

उ—प्रथमतो निर्दिष्टस्य भरतस्योपमेयस्य प्रथमनिर्दिष्टो महेन्द्र उपमानम्, पश्चान्निर्दिष्टस्य शत्रुघ्नस्योपमेयस्य पश्चान्निर्दिष्टो वरुण उपमानं भवति ।

प्र—रामपट्टाभिषेकनिमित्तं नृपतीनाह्वयन् दशरथः कं कं भूपतिं नाकारयामास? किं तत्र निमित्तम्?

उ—"न तु केकयराजानं जनकं वा नराधिपः ।
त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम् ॥"

प्र—श्रीरामः केन असकृदुपमीयते?

उ—महेन्द्रेण ।

प्र—हनूमतः कर्माणि संगृह्य लिखत ।

उ—राघवसुग्रीवयोः सख्यं समकल्पयत् । ततः सुग्रीवादेशात्सीतामन्वेषितुकामः सागरं तीर्त्वा लङ्कां प्राविशत् । सीतां ददर्श । अशोकवनिकां बभञ्ज । अक्षकुमारादीन् जघान । लङ्कां वालाग्निना ददाह । दृष्टा सीतेति रामाय प्रत्यायातो न्यवेदयत् । इन्द्रजितो ब्रह्मास्त्रेण बद्धौ मूर्च्छितौ च राम-

लक्ष्मणौ जाम्बवतः प्रेरणया ओषधिपर्वतमानीय प्राबोधयत्। एकदा च रावणस्य शक्त्या पातितं लक्ष्मणं तमेव पर्वतमादाय प्रबोधयामास।

प्र—शूर्पणखामधिकृत्य किं जानीथ?

उ—शूर्पणखा राक्षसानामधिपते रावणस्य, खरादीनां च स्वसा। कदाचिद्दण्डकायां विचरन्ती कामरूपिणी शूर्पणखा पञ्चवट्यां निवसतो रामस्य सौन्दर्येण मोहिता, तमेव पतिमभिलषन्ती, तेन च प्रत्याख्याता, तदादेशेन लक्ष्मणमुपसर्पन्ती तेनापि निराकृता, अन्ततः कर्णनासच्छेदेन विरूपिताभूत्। ततश्च सा खरादीनुद्बोध्य युद्धाय प्रेषयन्ती तेषां मरणाय, अन्ते रावणादिविनाशाय च स्वयमेव मुख्यं कारणमभूत्।

---

### प्रथमशाखायां तृतीयचतुर्थकक्षयोः

हितोपदेशविक्रमार्कचरितभर्तृहरिसुभाषितानि.

प्र—अस्मिन् हितोपदेशग्रन्थे कति तन्त्राणि विद्यन्ते? तेषां तथा नामकरणे किं बीजम्?

उ—मित्रलाभः, सुहृद्भेदः, विग्रहः, संधिरिति चत्वारि तन्त्राणि सन्ति। मित्राणां लाभेन कार्यसाधनस्य प्रथमे प्रतिपादितत्वात् तस्य तन्त्रस्य 'मित्रलाभः' इति संज्ञा। सुहृदामुपजापेन परस्परं विरोधमुत्पाद्य स्वकार्यसाधनप्रकारस्य द्वितीये तन्त्रे निरूपणात् द्वितीयस्य 'सुहृद्भेदः' इति नामधेयं कृतम्। शत्रुभिः सह संयुध्य स्वकार्यसाधनरीतेस्तृतीये वर्णनात्तस्य 'विग्रहः' इति नाम। युद्धात्पूर्वं परतो वा शत्रुभिः सह संधानरीतेश्चतुर्थे तन्त्रे कथनात्तस्य 'संधिः' इत्याख्या कृता।

प्र—हितोपदेशे कस्य कं प्रत्युपदेशो वर्ण्यते?

उ—पाटलीपुत्रनगराधिपतेः सुदर्शनस्य पुत्रा विष्णुशर्मणा हितमुपदिश्यन्ते।

प्र—विक्रमार्कचरित्रे पूर्वापरविरोधः स्फुरति वा?

उ—जरामरणरहितत्वापादकं देवतावरप्रसादलब्धं फलं ब्राह्मणात्प्रतिगृहीतं भर्तृहरिणा विक्रमार्काय दत्तमिति प्रथमतो निरूपितम्। पश्चात् साध-

द्विहायन्यां कन्यायामुत्पन्नेन शालिवाहननाम्ना बालेन विक्रमार्कस्य मरणे हेतुभूतेन स्थितमिति च वर्णितम्। अतश्चात्र पूर्वापरविरोधं मन्यन्ते विमर्शकाः। फलं विक्रमार्केण प्रतिगृहीतम्, परं तु न भक्षितमिति कतिपये कल्पयन्ति।

प्र—विद्वत्पद्धतेः पूर्वं मूर्खपद्धतेर्निरूपणे किं कारणम्?

उ—विद्वान्भवतु वा मा वा; 'अपदोषनैव विगुणस्य गुणः' इति न्यायेन मौर्ख्यस्वरूपं परिज्ञाय, तत्परिहारे अवश्यं यत्नः कर्तव्य इत्यभिप्रायेण भर्तृहरिणा विद्वत्पद्धत्यपेक्षयापि मूर्खपद्धतेः प्रथमं निरूपणमिति संभाव्यते।

प्र—भर्तृहरिम्, तद्ग्रन्थांश्चाधिकृत्य यावज्ज्ञातं विलिखत।

उ—भट्टिरेव भर्तृहरिः। भर्तृहरिरित्येतत्पदमेव 'भर्त्रि' इति रूपान्तरं प्राप्य' पश्चात् 'भट्टि' इति प्राकृतभाषामयं पदं जातमिति शब्दशोधननिपुणा विश्वसन्ति। भट्टिकाव्यव्याख्यातारो विद्याविनोदकन्दर्पश्रीधरा अपि भट्टिभर्तृहर्योरभेदमेवाभिमन्यन्ते।

पतञ्जलिविजये त्वेवं श्रूयते—चन्द्रगुप्तो नाम पतञ्जले रूपान्तरं कश्चन द्विजोत्तमः, ब्राह्मणक्षत्रियवैश्यशूद्रजातीयाश्चतस्रः कन्यकाः परिणिनाय। तासु च क्रमेण वररुचिविक्रमार्कभट्टिभर्तृहरयः सुता जज्ञिरे। षडपि दर्शनानि चन्द्रगुप्तोऽयमपाठयदाद्यांस्त्रीन्पुत्रान्। चरमस्य शूद्रापुत्रस्य तु स्वयमेव सर्वशास्त्ररहस्यमाविर्बभूव। व्याकरणमहाभाष्यं परं भर्तृहरेरभ्यर्थनया भूगर्तस्थितमुपदिदेश पिता। कालेन च सोऽयं चन्द्रगुप्तो गौडपादाचार्यानुग्रहात्प्रव्रज्यां स्वीकृत्य वाराणसीं ययौ। भर्तृहरिश्च श्रीरामचरितमुपनिबध्नन्, अग्रजस्य नाम परिगृह्य 'भट्टिकाव्यम्' इति तमेनं ग्रन्थं प्रकाशयामास। शृङ्गारशतकम्, नीतिशतकम्, वैराग्यशतकमिति शतकत्रयं भर्तृहरेरेव कृतिः। अनन्तरमयं भर्तृहरिर्व्याकरणसिद्धान्तावबोधकं वाक्यपदीयं नाम ग्रन्थं कारिकाभिर्जग्रन्थ। सपादलक्षग्रन्थात्मकं साराख्यं महाभाष्यव्याख्यानमप्येतेन कृतम्। तच्च व्याख्यानम् 'अहो भाष्यमहो भाष्यमहो वयमहो वयम्। मामदृष्ट्वा गतः स्वर्गमकृतार्थः पतञ्जलिः' इत्युक्तिसंजनितगुर्वपराधयोगान्न भुवि प्रतिष्ठां लेभे—इति।

भर्तृहरिनिर्वेदनामकं संप्रत्युपलक्ष्यमाणं नाटकमप्यनेन विरचितमिति केचित्। नेति बहवः।

शतकत्रयस्यापि नायं रचयिता, परं तु तत्र तत्र प्राचीनग्रन्थेषु स्थितानां पद्यानां तत्तत्प्रकरणानुगुण्येन ग्रथनमेवास्य भर्तृहरेः शिल्पमिति केचन विमर्शका मन्वानाः, तत्र प्रमाणतया बहूनां शतकत्रयान्तर्गतपद्यानामन्यत्र बहुत्रोपलम्भमुदाहरन्ति ।

रावणवधापरनामकस्य भट्टिकाव्यस्य रचयिता भट्टिश्च वलभीराज्यमहाराजाधिराजश्रीधरसेनेन आदृतमात्मानं कथयति। श्रीधरसेनश्च क्रिस्तीयसप्तमशताब्दीमध्यभागे (641—651 A.D.) स्थित इति चरित्रतो ज्ञायत इति स एव भट्टिकवेरपि समयः संभाव्यते। भट्टिभर्तृहर्योरैकत्वे, भट्टेरनुजो भर्तृहरिरिति पक्षेऽपि, अयमेव कालो भर्तृहरेरप्यभ्युपगन्तव्यो भवति । ह्यूएनसाङ्नामा चीनयात्रिकोऽपि क्रिस्तीयसप्तमशताब्दीमध्यभागे (651 A.D.) भर्तृहरिर्मृत इति ध्वनयति ।

---

## प्रथमशाखायां तृतीयकक्ष्यायां

### रघुवंशे प्रश्नानामुत्तराणि.

प्र—कालिदासस्यान्याः कृतयः काः ?

उ—कुमारसंभवः, मेघसंदेश इति द्वे श्रव्यकाव्ये, मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलमिति त्रीणि दृश्यकाव्यानि च कालिदासकृतय इति वदन्ति। केचन नलोदयं नाम यमककाव्यम्, हरिश्चन्द्रनलोपाख्यानं नाम अनुलोमप्रतिलोमकाव्यम्, ऋतुसंहारकाव्यम्, ज्योतिर्विदाभरणाख्यं ज्योतिःशास्त्रग्रन्थं च कालिदासकृतित्वेन व्यपदिशन्ति । अन्येऽपि जयदेवकृतितया विख्यातमपि चन्द्रालोकाख्यमलङ्कारग्रन्थं कालिदासीय इत्यभिमन्यन्ते। अपरे च श्यामलादण्डकम्, नवरत्नमालाम्, शृङ्गारतिलकम्, श्रुतबोधं च कालिदासकृतय इति संगिरन्ते ॥

प्र—रघुवंशे कति सर्गा विद्यन्ते ?

उ—एकोनविंशतिः सर्गाः सन्ति ॥

प्र— रघुवंश इति नामकरणे को हेतुः ?

उ—यद्यपि रघोः पितरमारभ्यैव इक्ष्वाकुवंशप्रभवा राजानो वर्णिताः; अथापि रघोरेव जन्मना प्रतिष्ठिताभूत् मनोः प्रसूतिरिति हृदि कलयता, अत एव

'वंशस्य कर्तारमनन्तकीर्तिं
सुदक्षिणायां तनयं ययाचे'

इत्युपनिबध्नता, 'आजन्मशुद्धानाम्' इत्यादिविशेषणानां रघावेव स्वरसतोऽन्वयमालोचयता, अत एव 'रघूणामन्वयं वक्ष्ये—' इत्युपक्रममाणेन, दिलीपचरितं च रघुचरितोपोद्धाततया प्रस्तुतवता कविना, "रघुवंशस्य चरितं चकार भगवानृषिः" इति, "अहं च रघुवंशश्च लक्ष्मणश्च महाबलः" इति च वाल्मीकीयं सुभाषितमनुसंदधानेन तथा नाम कृतमिति वदन्ति ॥

प्र—पञ्चमसर्गपठनेन युष्माभिर्ज्ञाताः सद्गुणाः के?

उ—कौत्सरघुवृत्तान्तेन गुरुकुलमधिवसता बाल्य एव विद्याभ्यासः कार्य इति, विद्याव्रतस्नातस्य च गुरुकुलान्निष्क्रान्तस्य शास्त्रीयगृहमेधिकर्म अवश्यमनुष्ठातव्यं भवतीति, राज्ञापि महात्मनां विषये प्रह्वेण सता आतिथेयी क्रिया कार्येति, सत्याशिषां महतां प्रसादो नियतं विनयग्राहिषु फलेग्रहिर्भवतीति च विज्ञायते। प्रियंवदाजव्यतिकरेण च—अधोगतिमूलमवलेपो ज्योतिष्मतामपि परिहरणीय इति, कृतज्ञता प्रत्युपकारकरणेच्छा च महात्मताया भूषणमिति च जानीमः ॥

प्र—रघुणा जितान् राज्ञः क्रमेण निर्दिशत।

उ—सुह्मदेशाधिपतिः, वङ्गेश्वरः, उत्कलराजः, कलिङ्गभूपतिः, पाण्ड्यपार्थिवः, केरलनायकः, पारसीकनृपतिः, हूणाधिपः, काम्भोजनरपतिः, उत्सवसङ्केताख्याः पर्वतीया गणाः, प्राग्ज्योतिषभूमिपालः, कामरूपेश्वरश्च क्रमेण जिताः ॥

प्र—इन्दुमतीस्वयंवरावसरे कतीनां नरपतीनां शृङ्गारचेष्टा वर्णिताः? ते च के इति ज्ञातुं शक्यते वा? कथम्?

उ—सप्तानां राज्ञां शृङ्गारचेष्टा वर्णिताः। तत्र लीलारविन्दभ्रमणपरः पुष्पपुराधिप इति, अंसविस्रस्तप्रावारकोत्कर्षणव्यापृत उत्कृष्टवस्त्रैरभिख्यातानामङ्गानामधिप इति, हेमपीठं पादेन विलिखन् 'यत्रोच्छ्रितो विभाति'

इति वर्ण्यमान ऋद्धिमतामवन्तीनां नाथ इति, वामभुजमासनार्धे निवेश्य विवृत्तत्रिकं सुहृदा संभाषमाणः सहस्रबाहोर्योगिनः कार्तवीर्यस्यान्ववाये संभूतः कश्चिदरसिको माहिष्मतीपालक इति, कैतकपत्रपाटको बृन्दावनाद्युपवनविराजमानप्रान्तानां वारिविहारासक्तावरोधवधूस्तनचन्दनलेपैरापाण्डुरोदकया कालिन्द्या विराजमानानां शूरसेनानां राजेति, रेखाध्वजलाञ्छनेन करेणाक्षानुदीरयमाणः "ज्याघातरेखे सुभुजो भुजाभ्याम्" इति निर्देक्ष्यमाणो महेन्द्रनाथ इति, वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं करं किरीटे निक्षिप्यावस्थितो भूपः रत्नानुविद्धार्णवमेखलाया दक्षिणस्या दिशो वल्लभः पाण्ड्य इति च ज्ञातुं शक्यत इति विमर्शकः ॥

प्र—ताम्बूलवल्ली कुत्राधिकमुपलभ्यते?

उ—महेन्द्रमलयस्थलीषु ॥

प्र—मुक्तामणयः कुत्रोद्भवन्ति?

उ—पाण्ड्येषु महोदधिताम्रपर्णीसंगमे ॥

प्र—पारसीकान्गन्तुं कतिधा मार्गोऽस्ति?

उ—'पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना' इत्युक्त्या स्थलवर्त्म, जलवर्त्मेति द्विविधो मार्गोऽस्तीत्यूहितुं शक्यते ।

प्र—'कलिन्दकन्या मथुरां गतापि—'
'सकौस्तुभं ह्रेपयतीव कृष्णम् ।'
अत्रोभयत्रापि किं नामानौचित्यं प्रतिभाति?

उ—"कालिन्दीतीरे मथुरा लवणासुरवधकाले शत्रुघ्नेन निर्मास्यत इति वक्ष्यति । तत्कथमधुना मथुरासंभव इति चिन्त्यम् । 'मधुरा मथुरापुरी' इति शब्दभेदः ।" इति मल्लिनाथः । आगामिनि युगे अवतरिष्यता वासुदेवेन सुषेणस्य उपमानिबन्धनमनुचितमिति विमर्शकः ।

अत्र केचित्—कृतयुगे लवणासुरस्य पित्रा मधुनाम्नासुरेणेयं निर्मिता मधुरानगरी। लवणोऽपीमामेवाधितष्ठौ । लवणं हतवता शत्रुघ्नेन तु इन्द्रादिदेवानामनुग्रहेण सा नगरी केवलं परिष्कारं प्रापितेत्येव श्रीरामायणोत्तरकाण्डपर्यालोचनायामवसीयते । किं च तवर्गद्वितीयघटितमथुरापदवाच्यनगरीतः

तवर्गचतुर्थाक्षरघटितमधुराशब्दार्थपुरी भिन्नैव। अत एव मल्लिनाथेनैव 'यद्वा सा अन्या' इति व्याख्यातम् । एवं च नात्र काचिदप्यनुपपत्तिः। 'सकौस्तुभं ह्रेपयतीव कृष्णम्' इत्यत्रापि कृष्णपदम् 'विष्णुर्नारायणः कृष्णः' इति कोशानुसारेण केवलं विष्णुपरमेव । एवमेव 'व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः' इति कुमारसंभवे, 'कार्ष्णेन पत्रिणा शत्रुः' इति रघुवंशे च कृष्णपदं विष्णवर्थकतया प्रयुङ्क्ते कालिदासः। अतोऽत्रापि न किंचिदनौचित्यमिति वदन्ति।

वस्तुतस्तु पूर्वोत्तरपद्यार्थैककण्ठ्यपर्यालोचनायां कृष्णोऽत्र देवकीनन्दन एव कविना स्मृत इति सुस्पष्टमवगम्यते। अतोऽत्र कवेरुपमानिबन्धनविषये किंचिदनौचित्यं स्फुरत्येव । परं तु रसपारवश्यमेव सर्वथापराध्नोतीति समाधेयमित्याहुः ।

'त्रस्तेन तार्क्ष्यात्किल कालियेन—' इति पद्यम् अरुणगिरिनाथेन पदार्थदीपिकाकृता च न धृत्वा व्याख्यातम्।

प्र—अज इति राजकुमारस्य नामकरणे किं कारणम्?

उ—"ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम्।
अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥"

प्र—इन्द्रध्वजपदार्थं विशदयत ।

उ—पुरा दैत्यनिरासाय ब्रह्मणा प्रचोदिता देवाः क्षीरोदधिं गत्वा विष्णुमभिष्टुत्य तत्प्रसादात्तेन दत्तं ध्वजमादाय स्वर्गमवापुः। तेन च समुच्छ्रितेन ध्वजेन पुरुहूतो रिपून्निरस्य, पश्चात् चेदिपाय उपरिचराय नाम्ना वेणुमयं ध्वजं प्रादात् । स चोपरिचरस्तस्य ध्वजस्य महान्तं महमनुष्ठाय मघोनः प्रसादपात्रं बभूव। तदा च तुष्टो देवराजः 'एवं ये राजानो महोत्सवमाचरन्ति, तेभ्यः प्रसन्नेनात्मना बलवृद्धिजयोत्कर्षवर्षसमृद्ध्यादिकमापादयिष्यामि' इति प्रतिजज्ञे। अतश्च प्रायेण प्रतिवर्षं नृपतिभिरयमुत्सवोऽनुष्ठीयते । अयं च महोत्सवो दिनचतुष्टयं व्याप्नोति । अहनि च पञ्चमे इन्द्रध्वजस्यावरोहणं भवति। 'चतुरस्रं ध्वजाकारं राजद्वारे प्रतिष्ठितम्' इति भविष्योत्तरे। वृक्षानयनतक्षणोत्थापननिमित्तविज्ञानादिकं तु बृहत्संहितायामिन्द्रध्वजाध्याये द्रष्टव्यम् ॥

प्र---रघुर्धर्मविजयीति कथं ज्ञायते?

उ---उत्खातानां प्रणतानां वङ्गानां प्रतिरोपणेन, जितस्यापि कालिङ्गस् मेदिन्यनपहरणेन विश्वजिद्यागे त्यागाय अर्थसंभरणेन चायं रघुर्धर्मविजयीति निश्चीयते ॥

प्र---चतुर्थसर्गे शरदृतुवर्णनावसरे कविना प्रदर्शितं चमत्कारं निरूपयत ।

उ---तत्र हि दशभिः पद्यैः शरत्कालो वर्ण्यते । प्रक्रान्तस्य नायकगतस्य वीररसस्य विच्छेदो मा भूदित्यभिप्रायेण महाकविना एकैकस्मिन्नपि पद्ये रघुवृत्तान्तोऽप्यायोजित इति वदन्ति ।

प्र---अस्मिन्काव्ये कति रघुवंशीया राजानो वर्णिताः? तान्नाम्ना निर्दिशत ।

उ---दिलीपः, रघुः, अजः, दशरथः, रामः, कुशः, अतिथिः, निषधः, नलः, नभः, पुण्डरीकः, क्षेमधन्वा, देवानीकः, अहीनगुः, पारियात्रः, शीलः, उन्नाभः, वज्रघोषः, शङ्खणः, व्युषिताश्वः, विश्वसहः, हिरण्यनाभः, कौसल्यः, ब्रह्मिष्ठः, पुत्रः, पुष्यः, ध्रुवसंधिः, सुदर्शनः, अग्निवर्णः, इति एकोनत्रिंशन्नृपतयोऽत्र काव्ये वर्णिताः ।

प्र---कविरस्मिन्काव्ये स्वात्मानं स्वकाव्यं चाधिकृत्य यत्किमपि सूचयति वा?

उ---"वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे" इति पद्येन, महाकविरयं रघुवंशकर्तुरात्मनः कीर्तिमनन्तामभिलषन्, संश्रितकामधेनुं सरस्वतीं तमेनमर्थं प्रार्थयत इव । गुर्वीं व्यङ्ग्यार्थपरम्परामर्थयमानः श्रुतपारदृश्वा सहृदयलोको रघुकाव्यमिदमनुसंधत्ताम् । अत्र काव्ये तादृशं गुरुमर्थमनुपलभमानस्तदुपलम्भाय सरसहृदयो भावुकः काव्यान्तरं परिशीलयितुं प्रवृत्त इति नव्योऽयमभव्यः परीवादः कदापि मे मा भूदिति स्वाशयम्

"गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ।
गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः ॥"

इति श्लोकेन सूचयतीव । एतादृशे निर्हतवाच्यार्थप्राधान्ये व्यङ्ग्यैकजीविते भगवत्या गिरां देव्याः प्राणायमानेऽस्मिन्काव्ये, सत्स्वपि सर्वेषु रसमयेषु सर्गेषु, चतुर्दशः सर्ग एव करुणरसप्रधानः सर्वात्मना सहृदयानधिकमनुरञ्जयितुं पारयति । स एष सर्गः सकृत्पठ्यमानः स्वस्मिन्नादरमनाविष्कृतामप्यप्रतिषेधतां सहृदयानां हृदयं स्वयमेव समावर्जयिष्यतीति स्वाभिसंधिं महामतिरयम्

"तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः ।
यद्यर्थिता निर्हतवाच्यशल्यान् प्राणान्मया धारयितुं चिरं वः ॥"

इति प्रसन्नमधुरेण पद्येन प्रकाशयतीवेति चिराय काव्यपरिशीलिनो भावयन्ति ॥

प्र—कालिदासस्य किमपि बिरुदमस्ति वा? अस्ति चेत्, किं तत्? किं तत्र कारणम्?

उ—'दीपशिखाकालिदासः' इति बिरुदेन संभाव्यते महाकविरयम् । तत्र च कारणम्,

'संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥'

इति षष्ठसर्गस्थं वर्णनमिति वदन्ति ।

---

## प्रथमशाखायां चतुर्थकक्ष्या ।

### कुमारसंभवः ।

प्र—कुमारसंभव इति काव्यनाम्न औचित्यं विशदयत!

उ—अत्र हि तारकासुरेण पीड्यमानैर्देवैस्तज्जयाय परमेश्वरात्पार्वत्यामुत्पद्यमानस्य सेनानीत्वेन व्रियमाणस्य सुब्रह्मण्यस्य उत्पत्तिर्वर्ण्यत इति काव्यनाम समुचितमेवेति भाति ।

प्र—एतत्काव्यकथाभागस्य आकरग्रन्थः कः?

उ—अस्य आकरः शिवपुराणम्; यतः प्रायेण शब्दार्थाभ्यामुभयो-

मार्गदर्शि; अत एव 'कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च' इति रामायणे श्रूयमाणेन कुमारसंभवपदेनैव स्वकाव्यं व्यपदिशति महाकविरिति परे।

प्र--अस्मिन्काव्ये कति सर्गा विद्यन्ते?

उ--अत्र काव्ये सप्तदश सर्गा विद्यन्ते।

प्र--संप्रति दृश्यमानाः सर्वेऽपि सर्गाः कालिदासकृता नेति केचन विमर्शकाः।

अयमभिप्रायः सप्रमाणं स्थाप्यताम्, अथ वा खण्ड्यताम्।

उ--तत्राष्टावेव सर्गाः कालिदासेन कृताः। नवमादयः सर्गास्तु येन केनापि विरचिताः स्युरिति भाति। नवमादिषु किल सर्गेषु क्वचित्क्वचित् शब्दतो वर्णनादिभिश्च पूर्वेतरसर्गसंवाददर्शनेऽपि भूयसा विसंवाद एव समुपलभ्यते। किं च तत्र प्रायेण विसंष्ठुलानि परस्परसौहार्दविरहितानि शिथिलशिथिलानि क्वचित्कचिदश्लीलप्रायाणि अपप्रयुक्तानि पुनरुक्तकल्पानि च पदजातानि, नियतमकालिदासीयत्वमेव नवमादीनां सर्गाणामावेदयन्ति। तथा हि--सुकान्तकान्तामणितानुकारम्, (९-२) सुविम्बितस्य, (९-४२) सुविभ्रमश्रीः, (९-४७) सुतीक्ष्णतुण्डः (९-४८) सुदुर्वहम्, (१०-१२) सुप्रसादपरेव, (१०-३१) सुदुर्विषहम्, (१०-४०) सुस्नातानाम्, (१०-४९) सुप्रह्वाः, (१०-५०) सुस्नाताः, (१०-५२) सुदुर्धरम्, (१०-५५) सुपुत्रिणीनाम्, (११-१४) सुपीनगात्री, (११-१५) सुमङ्गलोपायन, (११-३५) सुमन्द्र, सुवृत्तगीत, (११-३६) सुगौरवेण, (१२-६) सुविराजमानम्, (१२-१४) सुदृष्टे, (१२-२१) सुभक्तिभाजाम्, (१२-३१) सुदुःसहाम्, (१२-४८) सुनन्दनम्, (१२-४९) सुदीनाम्, (१३-३६) सुतन्तुजाल, (१३-४१) सुदुःसहम्, (१४-२) सुरोषणः, (१४-८) सुजातसिन्दूर, (१४-२४) सुविस्तृतायाः, (१४-३०) सुसंकुलायाम्, (१४-४०) सुभैरवैः (१४-४७) सुपूर्णाः, (१४-५१) सुघनदुर्धर, (१७-२३) सुविधुराः, (१७-३२) सुदुःसहेन, (१७-३९) इत्यादिषु श्रूयमाणं सुपदं क्वचन सुश्लिष्टमपि भूयसा श्रुतिविरसं हृदयमुद्वेजयति सहृदयानाम्।

रतानन्दसुखस्य भङ्गात् (९-१६) द्वितीयकौपीनचलाञ्चलेनाहरन्मुखेन्दोरकलङ्किनोऽस्याः (९-१९) इतीदं मनःसंकोचमुदञ्चयति भावुकानाम्।

किं च, दुर्विषह्येण, (१०-१३) सुलभ्याताम्, (१०-१३) उपात्तुम्, (११-३) शृणुष्व, (११-१२) शरस्तम्भमधि, (११-१३) उपात्तुम्, (१२-४६) अविदताम्, (११-४९) परित्यजध्वम्, (१२-३६) चरध्वम्, (१२-६७) मनुते तृणाय, अहकप्रमुख्यान्, (१२-४६) शृणुध्वम्, (१२-५४) कतिशः, (१५-४) अहं मृधे जेतुमरीनरीरमन्, (१५-५१) बृन्दार (१५-५३) जहिहि प्रतिपक्षम्, (१७-१५) दुष्प्रेक्षणीयम्, (१७-१९) इत्यादौ प्रयुज्यमानानि पृषोदरादिगणेन प्रार्थ्यमानानि पदानि नान्यत्र कालिदासीये भूयसा समुपलभ्यन्ते। अत्र च खल्वस्त्ययप्रयोगाभावः प्राचीनबहुमहाकविप्रयोगावष्टम्भेन यथाकथंचित्समर्थयितुं शक्यत इति जानतामप्यस्माकं हृदयं न प्रसीदति सर्वात्मना कालिदासीयमिदमिति प्रतिपत्तुम्। शरस्तम्भमधीत्यत्र अधिशरस्तम्भमिति वक्तव्ये अधेर्व्यत्ययः प्रामादिक इति व्याकुर्वाणः सीतारामः, महाकविप्रयोगात्साधुरयमित्यातिष्ठमानानां पदपण्डितानां पक्षं नाभिनन्दतीव। उपादातुमित्यर्थे उपात्तुमिति प्रयोगो विस्मयं जनयति। इदं चावसरेऽस्मिन्नभिधातुमभिलषामः— यदुत अनिट्केषु केषुचन धातुषु निष्ठातुमुनोरेकप्रक्रियकतया वञ्चिताः पण्डिता अपि तथैवान्यत्रातिदिशन्ति। तथा च —नद्धः-नद्धुम्, सोढः सोढुमित्यादिकं दृष्ट्वा, बद्धवत् बद्धुमित्यतिदिश्य प्रयुञ्जाना लक्ष्यन्ते। एवमेवात्राप्युपात्तपदेन वञ्चितः पौण्ड्रककालिदासः, उपात्तुंशब्दमुपादातुमुपाक्रमत। वेत्तेः अविदतामिति प्रयोगः, परार्थैकफलक्रियस्य महाकवेः त्यजतिचरतिशृणोतीनामात्मनेपदप्रयोगश्च केवलमार्षत्वमाकाङ्क्षतः। मनुते तृणायेति प्रयोगः, ‘मन्यकर्मणि- ’ इति सूत्रे श्यना निर्देशं कुर्वाणं पाणिनिं तृणायापि न मन्यते। ‘भाष्यकारस्तु त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वा एतत्सूत्रं प्रत्याचख्यौ’ इति कौमुदीपङ्क्तिं पठन्तो विद्यार्थिनोऽपि ‘अहकप्रमुख्यान्’ इति प्रयोगेण उच्चैस्तालमुपहसिष्यन्ति। कति वारानित्यर्थे कतिश इति तु अपूर्वं शास्त्रमपेक्षते। ‘अहं मृधे जेतुमरीनरीरमन्’ इत्यस्यार्थपरिज्ञानाय ‘मृधे सङ्गरे अहमेव अरीन् शत्रून् जेतुं समर्थोऽस्मि नान्य इति वदन्तः सन्तः अरीरमन् रेमिरे’ इति सीतारामव्याख्यामवलोकयताम् ‘रामो राज्यमचीकरत्’ इत्यत्रेव स्वार्थे णिजिति नूनं प्रतिभास्यति शाब्दिकानाम्। बृन्दारासुरेति देवार्थे बृन्दारपदं प्रयुञ्जानः कविः, ‘शृङ्गबृन्दाभ्यामारकन्’ इत्युपसंचक्षाणं वररुचिम्, आरप्रत्यय एवास्तु; ततः

स्वार्थे कप्रत्ययेनेष्टं सिध्यतीति प्रौढिमप्रदर्शयन्तं पतञ्जलिं च अपूर्वमेवमर्थमुपदिशतीव। जहिहि प्रतिपक्षामित्यत्र जहातिना सिद्धिमपश्यद्भिः, हन्तिमपेक्षमाणैस्तु 'हि' इति पृथक्पदमिष्यतामित्यपूर्वं व्याख्यातारः।

किं च दुर्घटानि पदानि समर्थयितुं प्रवृत्तः श्रीशरणदेवः, आपातमात्रेण दुष्टावभासिनां पदानां समर्थनाय त्रिंशतं वारान् कुमारसंभवं स्मरति। न हि तत्र अष्टमसर्गादुपरि विद्यमानानां पूर्वोदाहृतानां स्मरणगन्धोऽप्यस्ति। प्रायेण पाठभेदप्रयुक्तानि, अक्लिष्टसमाधानानि, अनुद्वेजकानि, प्रौढकवेरपि संभाव्यान्येव पदानि वाक्यानि च शरणदेवेन समुद्धृतानि, न पुनरेवंविधानि मनःसंकोचकारीणीत्यपि समयेऽस्मिन्स्मारयामः सहृदयान्।

इदमपि भावुकानां पुरस्तात्कुर्मः—स्वानन्दसुखस्य, (९-१६) विहारलीलागतिभिः, (९-३७) देहं दुर्वहं वोढुमक्षमः, (१०-२३) सान्द्रप्रमोदोदयसौख्यहेतुभूतम् (११-९) इत्यादिषु यदि अर्थभेदतात्पर्यपुष्टिकल्पनादिना पौनरुक्त्यं परिजिहीर्षन्ति रसिकमणयः, तर्हि किं नश्छिन्नम्, वयमपि तथैवाङ्गीकुर्मः।

गिरीशगौरीतनयेन, (१३-९) अद्रिपुत्रीमहेशपुत्राय, (१३ २९) तनयोऽसि गिरीशगौर्योः, (१७-१४) इति त्रिषु स्थलेषु कुमारं गिरीशाद्गौर्यामुत्पन्नं त्रिः सशपथमिव सिद्धान्तयन्नयं कविनल्लजः, तद्विषये जगदेव असंशयालु मन्यमानात्कालिदासान्नियतं भिद्यते।

अपि च, 'अहो अहो देवगणाः, (१२-५४) अथो अचुम्बत्, (१३-१९) अहो अशेषम्, (१७-१३) इति प्रयोगेण ओत्सूत्रं स्मारयन्, 'महासुराः स्मरारिसूनुप्रतिपक्षवर्तिनः' (१९-४०) इति श्लोके महान्तो देवा इत्यर्थे महासुरपदं पक्ष इत्यर्थे प्रतिपक्षपदं च प्रयुज्य अपूर्वरचनाचातुरीं शिक्षयन्, स्थलपुराणाद्यपेक्षयापि सुबहूनि सुपदानि संघटय्य आत्मना संपादितपूर्वं महर्षित्वमेव,

'उदारदुरितोद्धारहारिणी दुर्गतारिणी।
महेश्वरजटाजूटवासिनी पापनाशिनी॥
सगरान्वयनिर्वाणकारिणी धर्मधारिणी।
विष्णुपादोदकोद्भूता ब्रह्मलोकादुपागता॥

गङ्गावारिणि कल्याणकारिणि श्रमहारिणि ।
स मग्नो निर्वृतिं प्राप पुण्यभारिणि तारिणि ॥ '
(१०-२९— ३६.)

इति गङ्गावर्णनावसरे शब्दार्थाभ्यामनितरसाधारणं चमत्कारमाविष्कुर्वन्, नियतं प्रत्याययति ।

किंच, महाकविना यदि तारकासुरवधान्तः कथाभागो निबद्धः स्यात्, तर्हि शिशुपालवधादिवत् प्रतिनायकवधेन तारकवध इति, हरविजयादिवत् नायकविजयेन कुमारविजय इति वा काव्यमिदं व्यपदिष्टं स्यात् । यतश्च नैवम्, ततश्च मन्यामहे—नवमादीनां पौण्ड्रककालिदास एव कर्तेति । एवं हि प्राञ्चो महाकाव्यलक्षणनिरूपणावसरे वदन्ति 'कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ' इति । ' वृत्तनामकं कुमारसंभवादि ' इति तत्रैव व्याख्यातारः । यदि च विजयान्तः कथाभागः कविना एकेन संदृब्धोऽभविष्यत्, नियतं कुमारसंभव इति नेदं काव्यं व्यपादेक्ष्यत ।

अत्रेयमाशङ्का, मन्यामहे, नूनं स्वयमेव पुरःसरिष्यति—अष्टमं सर्गमभिव्याप्यापि वस्तुविन्यासे विचार्यमाणे, नूनमियमाख्या काव्यस्य न युज्यते । न हि अन्तिमेऽप्यष्टमे सर्गे कुमारस्य संभवो वर्णितः । इत्थं च भवन्मतेऽपि जायमानामनुपपत्तिं नाहमेकश्चोदनीयः । भवदभिमतरीत्यापि वस्तुविन्यासानुरोधे गौरीविवाह इत्येवंरीत्या खलु नाम सुसंगतं भविष्यति । तत्कथं भवन्मतेऽपीदं सुश्लिष्टं भवतीति ।

नूनमिदं प्रष्टव्यं साधु पृष्टाः स्मः । सप्तमे सर्गे विवाहकथामुपवर्ण्य, अष्टमे अत एव तयोरादिदंपत्योः संभोगशृङ्गारमुपनिबध्नाति संक्षेपप्रियोऽसौ महाकविः । अमोघवीर्यस्य भगवतो नीललोहितस्य प्रथमे रसे वर्ण्यमाने कुमारस्य संभव उक्तप्राय इति हि महाकवेरान्तरोऽभिसंधिः । अष्टमः सर्गो न कालिदासेन कृत इत्यभिप्रायस्तु, आनन्दवर्धनमम्मटादिभ्यो नियतं न रोचिष्यते । निपुणं विमृश्यमाने, अष्टमे सर्गे शब्दार्थरसादिभिरनुभूयमानश्चमत्कारातिशयः, न खलु कालिदासेतरेण संपादयितुं पार्यत इति, वस्तुतः सहृदयो न कोऽपि विप्रतिपत्स्यते । इदमपि कवेर्गूढाकूतम्—यदुत प्रथमं विमुक्तसङ्गस्यापरिग्रहस्य, पुनरपि वशित्वाद्बलवन्निगृहीतेन्द्रियक्षोभस्य पशूनां

पत्युः सांप्रतिकीमवस्थामालोच्य, भवभूतिसिताभ्यां गिरिजायाः स्तनाभ्याम् 'तपस्वी कां गतोऽवस्थाम्' इति स्मेराननाभ्यां भवितव्यमिति भावयितव्यं भावुकैरिति। अत एव सप्तभिः सर्गैर्विवाहावधिकथासंदर्भेण काव्यं न विरचितम्।

किं च, कविप्रथमपद्धतौ श्रीमति रामायणे बालकाण्डे कुमारस्योत्पत्तिं किंचिदिव विस्तरतो निरूप्य,

'गृहीत्वा क्षीरमेकाह्ना सुकुमारवपुस्तदा।
अजयत्स्वेन वीर्येण दैत्यसैन्यगणान्विभुः॥

सुरसेनागणपतिं ततस्तममलद्युतिम्।
अभ्यषिञ्चन्सुरगणाः समेत्याग्निपुरोगमाः॥

एष ते राम गङ्गाया विस्तरोऽभिहितो मया।
कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च॥"

इति पद्यानि पठ्यन्ते। महर्षौ महाकवौ च वाल्मीकौ दृढभक्तिरसौ कालिदासः, तत्र श्रुतामेव कथामात्मकाव्यमारोप्य, तत्रैव स्वयमपि तारकासुरवधादिकथां विहाय, तत्र श्रूयमाणेनैव कुमारसंभवपदेन स्वकीयं वाङ्मयम् अलंचकारेति भावयतां सुमनसां नवमादयः सर्गा नवीना एवेति नियतं भास्यतीति साहित्यमर्मवेदिनः सहृदयाः।

इमानि चास्माकमुपष्टम्भकानि कुमारसंभवविवरणवाक्यानि सहृदयेभ्य उपहरामः—

'ननु काव्ये यत्साध्यं तदनुसारेणैव काव्यस्य संज्ञा कर्तव्या। यथा—युधिष्ठिरविजयजानकीहरणशिशुपालवधप्रभृतीनाम्। अत्र तु तारकासुरनिग्रहः काव्ये साध्यतया निर्दिष्टः, 'तस्मिन्विप्रकृताः काले तारकेण दिवौकसः' इत्युपक्रमात्। तस्मात्तारकवध इत्येव संज्ञा कर्तव्या। तत्पर्यन्तं च काव्यं प्रवर्तयितव्यम्। न चैतत्कृतम्। तस्मादसमञ्जसमिदं काव्यम्। अपि च कुमारोत्पत्तिपर्यन्तमपि न काव्यं कृतम्। तस्मादनुपपन्नमिदं नामापीति। अत्रोच्यते—नात्र तारकासुरवधः काव्ये साध्यः, 'तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये' इति देवैः कुमारसृष्टिमात्रस्यैव ब्रह्माणं प्रति

प्रार्थितत्वात्। तारकासुरनिग्रहस्तु कुमारोद्भवप्रस्तावकतया निमित्तत्वेनापेक्षितः; यथा—किरातार्जुनीये दुर्योधनजयः । तस्मात् कुमारसंभव इत्येव संज्ञा युक्ता। न चैवं सति तत्पर्यन्तं काव्यं प्रवर्तयितव्यमिति वाच्यम्, 'उमारूपेण ते यूयं संयमस्तिमितं मनः। शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत्' इति ब्रह्मणः प्रतिवचनेन शंभोश्चित्ताकर्षणमात्रस्यैव परमसाध्यत्वेन प्रतिपादनात्। कारणपौष्कल्ये कार्यस्यावश्यंभाव एव ब्रह्मणस्तथा निर्देशे हेतुरिति चावगन्तव्यम् । शंभोश्चित्ताकर्षणं पुनरष्टमे सर्गे विस्तरतः प्रतिपादितम । यथोक्तमन्त्यश्लोके—

'समदिवसनिशीथं सङ्गिनस्तत्र शंभोः
शतमगमदृतूनां सार्धमेका निशेव ।

स न सुरतसुखेषु छिन्नतृष्णो बभूव
ज्वलन इव समुद्रान्तर्गतस्तज्जलेषु ॥' इति ।

उक्तं च पञ्चमसर्गान्ते देवीं प्रति देवेनैव 'अद्यप्रभृत्यवनताङ्गि तवास्मि दासः क्रीतस्तपोभिः' इति । तस्मात् 'उमारूपेण—' इत्युपक्रमात् 'अद्यप्रभृति' इति परामर्शात्, 'समदिवसनिशीथम्' इत्युपसंहाराच्च शंभोश्चित्ताकर्षणमात्र एव तात्पर्यम्, 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इति वचनात्। तच्च सम्यक्प्रतिपादितम्। अष्टमसर्गे संभोगवर्णनेन कुमारोत्पत्तेर्बिन्दूपक्षेपोऽपि कृत इति सर्वमनवद्यम्। यत्त्वत्र तारकासुरनिग्रहपर्यन्तं चिकीर्षितमिदं काव्यम्, निजसंभोगवर्णनेन कुपिताया देव्याः शापादसंपूर्णं जनितमिति कैश्चिदुक्तम्; तदप्युक्तया रीत्या परिहृतं वेदितव्यम्। कवेश्चिकीर्षाया एतत्पर्यन्तत्वस्य समर्थितत्वात् । देव्याः शापाभावं पुनरष्टमसर्गादौ निपुणमुपपादयिष्यामः" इति। अनेन विवरणकारस्य वचनेन अष्टमसर्गावसाने 'सर्गोऽयं चरमो गुणैरचरमः—' इति तदुक्त्या च नवमादिकाः सर्गा विवरणकर्तुरगोचरा इति प्रतीत्या, ततोऽपि नवीनतराणीमानि पद्यजातानीत्यनुमातुं शक्यते। अन्यथा ह्ययं विमर्शकाग्रणीर्विवरणकारः कथं नामैतान्सर्गानधिकृत्य एकमप्यक्षरं नात्मना प्रयुङ्क्ते? विवरणकर्ता नारायणपण्डितश्च इतो वर्षत्रिशत्या न प्राचीन इति तदीयान्मानमेयोदयग्रन्थादवसीयते । उणादिवृत्तिपरिग्रहस्तु किमपि विशयं विशदय-

तीत्यपि निवेदयामः। अपि च, अष्टमादुपरितनान्सर्गानात्मव्याख्यानेन असंजीवयन्मल्लिनाथमहाशयोऽप्यस्माकमनुकूल इत्यपि भावयामः ॥

किं च कालिदासेन उचितेऽपि तत्तत्संदर्भे योऽयमाचारोऽन्यत्र तद्ग्रन्थे निबद्धो न दृश्यते, तादृशं कमप्याचारं निरुञ्छनाख्यं नवीनकुमारसंभवे निबद्धं पश्यामः। यथा —'तस्योत्तरीयेण निजाम्बरेण निरुञ्छनं चारु चकार शक्रः' (१३-१८) 'निरुञ्छनं चक्रुरथोत्तरीयैः' (१३-२१) इति। 'निरुञ्छनं परिवर्तनम्। चारु चकार। भ्रातृभावायान्योन्यवस्त्रग्रहणं चक्रुरित्यर्थः। तदुक्तं मेदिन्याम् —निरुञ्छनं बन्धुतायै वाससः परिवर्तनम्' इति। लोकेऽपि भ्रातृतायै परस्परोष्णिषबन्धनव्यवहारस्तद्वदत्रापीति। अनुशासनेन सामान्यतो वासोग्रहणेन प्रकृते उत्तरीयग्रहणं संगच्छते। लोकव्यवहारस्तु संप्रदायसिद्धः। उष्णिहि विशेषश्रैष्ठ्योपलम्भ एव व्यवहारमूलमिति मन्तव्यम्' इति सीतारामो विवृणुते। निरुञ्छनपदप्रयोगार्हसंदर्भेषु बहुषु सत्स्वपि सर्वात्मना तमुपेक्षमाणस्य प्राचो महाकवेः कालिदासस्य कृतिरियं नवमसर्गादिरिति नास्माकं हृदयमवगाहते ॥

ततश्च,

शब्दार्थादिविसंवादादश्लीलादपशब्दतः।
इतिहासपुराणादिच्छायायाः पुनरुक्तितः ॥

अन्यैरस्मरणादत्र समाख्याचारयोर्बलात्।
नवमादि नवीनं स्यादिति निश्चिन्महे वयम् ॥

प्र—अस्मिन्काव्ये के पुरुषार्थाः कविना प्रतिपादिताः?

उ—अत्रैवमुल्लिखति विवरणकारः—'अस्मिन्काव्ये महाकविना देवयोस्तपश्चरणप्रतिपादनेन तपसः सकलपुरुषार्थसाधनत्वं प्रतिपादितम्। महाजनपरिभवः समूलनाशाय भवतीति व्युत्पादयितुं कामदहनवृत्तान्तो वर्णितः। सर्वोपकारक्षमं गार्हस्थ्यमेव परमं श्रेय इति दर्शयितुं विवाहवर्णनं कृतम्। देवस्य भक्तवश्यतां प्रतिपादयितुमष्टमसर्गे देव्या अनुवृत्तिर्वर्णिता। इत्थमस्मिन्काव्ये बहवः पुरुषार्था महाकविना प्रतिपादिता इति स्वयमूहनीयम् ॥' इति।

प्र—हिमवति विद्यमानानि कतिचन विशिष्टवस्तूनि निर्दिशत ।

उ—शिलाजतूनि, मनःशिलाः, ज्योतिर्लताः, देवदारवः, कस्तूरीमृगाः, चमर्यश्च सन्ति ।

प्र—'रतिः संभोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया; तद्वर्णनं हि पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम्' इत्यालंकारिकाः । एवं स्थिते महाकविना कथमष्टमे सर्गे पार्वतीपरमेश्वरयोः संभोगशृङ्गारो वर्णितः?

उ—अत्रैवं विलिखति विवरणकारः—"पार्वतीपरमेश्वरयोः शरीरग्रहणमात्रमपि लोकानुग्रहार्थमेव । यथोक्तं भगवता—'विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः' इति । देव्या अपि शरीरग्रहणादिकं लोकानुग्रहार्थमेवेति देवीमाहात्म्यादिषु तत्र तत्र प्रतिपादितम् । त्रिविधा हि लोके जनाः—मुक्ताः, मुमुक्षवः, सक्ताश्चेति । तत्र मुक्तानां कृतकृत्यत्वादेतयोर्लीलायितानां संचिन्तनश्रवणादिभिः परब्रह्मानुभवतुल्यकुल्यः परमाह्लादो भवतीति अनुग्रहो भूयानेव । मुमुक्षूणां तु लीलायितश्रवणानुसंधानादिभिरन्तःकरणशुद्धिरूपो महानुग्रहः स्पष्ट एव । किं च महत्तरैरपि तपश्चरणैरुभाभ्यामपि तदनुग्रह एव कृतः, इत्थं कर्तव्यमित्युपदेशमात्रपरत्वात्तयोस्तपश्चरणानाम् । कामिनां तु चित्तावर्जनं संभोगशृङ्गारानुगृहीतकथाश्रवणेनैव सुकरमिति लीलागृहीतशरीरौ भगवन्ताविमं प्रकारमारब्धवन्तौ । येन केनापि प्रकारेण भगवति मनःप्रणिधानमेव मुक्तिकारणमित्युक्तं भागवते—'कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा । नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ।' इति । महाकविरपि कामिनां चित्तं पार्वतीपरमेश्वरपादारविन्दासक्तं विधातुमेवाष्टमे सर्गे वात्स्यायनशास्त्रानुसारिणीं पदवीमुररीचकार । तस्माल्लोकोत्तरलौकिकनायकव्यवहारमखिलजनानुग्रहार्थमनुकुर्वतोरेतयोर्महानटयोस्तदनुगुणानां प्रबन्धानां निर्माणतद्व्याख्यानश्रवणादिभिरनुग्रह एव भूयानाविर्भवति । तदनुबद्धानि वचनानि तु स्तुतावेव पर्यवस्यन्तीत्यलमतिप्रसङ्गेन ॥" इति ।

ध्वनिकारस्तु—'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः' इत्युक्त्वा, 'महाकवीनामप्युत्तमदेवताविषयप्रसिद्धसंभोगशृङ्गारनिबन्धनाद्यनौचित्यं शक्तितिरस्कृतत्वाद्ग्राम्यत्वेन न प्रतिभासते; यथा—कुमारसंभवे देवीसंभोगवर्णनम्' इत्याह ।

## मध्यमशाखायां प्रथमकक्ष्या ।

### शिशुपालवधः ।

प्र—महाकाव्यपञ्चकं किम्?

उ—रघुवंशः, कुमारसंभवः, किरातार्जुनीयम्, शिशुपालवधः, नैषधीयचरितम्, इत्येतानि पञ्च महाकाव्यानि । केचित्तु कालिदासभारविमाघश्रीहर्षभट्टीन्पञ्च महाकवीन्परिगृह्य, तदीयानां रघुवंशकुमारसंभवमेघदूतकिरातार्जुनीयशिशुपालवधनैषधीयचरितरावणवधनाम्नां काव्यानां महाकाव्यत्वं प्रतिपद्यन्ते ।

प्र—माघकाव्ये कथाभागस्य मूलग्रन्थः कः?

उ—महाभारतमिति कतिपये; भागवतमिति केचन वदन्ति ।

प्र—माघे कति सर्गा विद्यन्ते?

उ—विंशतिः सर्गाः ।

प्र—महाकाव्यस्य किं लक्षणम्? माघे विद्यते वा तत्?

उ—'नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम् ।
उद्यानसलिलक्रीडामधुपानरतोत्सवाः ॥
विप्रलम्भो विवाहश्च कुमारोदयवर्णनम् ।
मन्त्रद्यूतप्रयाणाजिनायकाभ्युदया अपि ॥
एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमुच्यते ।'

इत्यालंकारिका महाकाव्यलक्षणमामनन्ति । माघकाव्ये च तृतीये सर्गे द्वारकानगरसमुद्रयोः, चतुर्थे रैवतकशैलस्य, षष्ठे ऋतूनाम्, नवमैकादशयोश्चन्द्रार्कोदयस्य, सप्तमाष्टमदशमेषु उद्यानसलिलक्रीडामधुपानरतोत्सवानाम्, द्वितीये मन्त्रस्य, सप्तदशे प्रयाणस्य, अष्टादशैकोनविंशविंशेषु आजेर्नायकाभ्युदयस्य च वर्णनान्महाकाव्यलक्षणं सुसमन्वितं भवति ।

प्र—अस्य कवेरभिमतोऽङ्कः कः? एतदीयं बिरुदं च किम्?

उ—श्रीपदं तावदस्य संमतोऽङ्कः । प्रतिसर्गमन्तिमपद्ये नियमेनायं श्रीपदं प्रयुङ्क्ते । अयं च विषयः,

'श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म
लक्ष्मीपतेश्चरितकीर्तनमात्रचारु ।
तस्यात्मजः सुकविकीर्तिदुराशयादः
काव्यं व्यधत्त शिशुपालवधाभिधानम् ॥'

इति ग्रन्थान्ते कविनैव प्रकाशितः । बिरुदं चास्य 'घण्टामाघः' इति । अयं च माघकविः,

'उदयति विततोर्ध्वरश्मिरज्जा-
वहिमकरे हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥'

इति वर्णनश्रवणसंजातसंमोदादरमेदुरैः सूरिभिः 'घण्टामाघः' इति बिरुदेन संभावित इति श्रूयते ।

प्र—शिशुपालवधकाव्यं किरातार्जुनीयस्यानुकरोतीति वक्तुं शक्यते वा ?

उ—किरातार्जुनीये भारविणा यादृशानि वर्णनानि कृतानि, प्रायेण तादृशान्येव शिशुपालवधेऽपि माघेन निबद्धानि । भारविकाव्य इव माघकाव्येऽपि द्वितीयस्मिन्सर्गे नीतिशास्त्रसिद्धान्तो निपुणं निरूपितः । उभयोरपि काव्ययोरादिमः सर्गो वंशस्थवृत्तेन श्रीशब्दमादितः कृत्वा समुपनिबद्धः । किरातार्जुनीये लक्ष्मीपदमङ्कतया विन्यस्यति भारविः; माघोऽपि शिशुपालवधे श्रीशब्दमङ्कतया विनिवेशयति । 'तावद्भा भारवेर्भाति यावन्माघस्य नोदयः' इति च प्राचीना वार्ता । भारवेरर्वाचीनश्चायं माघ इति प्रमाणान्तरेण प्रतिपन्नोऽयमर्थः । अतश्च माघो भारवेरनुकरोतीति युज्यते वक्तुम् ।

प्र—माघकाव्ये परिशील्यमाने, कवेरस्य केषु केषु शास्त्रेषु पाण्डित्यं स्पष्टीभवति ?

उ—एकैकस्मिन्नपि सर्गे, विशिष्य द्वितीये चतुर्दशे च विमृश्यमाने, बहुषु दर्शनेष्वस्य समीचीना परिचितिरवगम्यते । विशेषतश्च सौगतदर्शने, नीतिशास्त्रे, शब्दविद्यायाम , न्यायतन्त्रे, संगीतकलायाम् , अलंकारप्रस्थाने,

आयुर्वेदविस्तरे च सिद्धान्तरहस्यमर्मज्ञता स्फुटीभवति। तत्रापि पाणिनीये तन्त्रे परमोऽस्य पक्षपात इति द्वितीयः सर्गो निर्विचिकित्सं कथयति।

प्र—माघमधिकृत्य यज्जानीथ, तल्लिखत।

उ—पुरा किल श्रीवर्मलाख्यस्य राज्ञः सुप्रभदेवनामा कश्चन सर्वाधिकारी आसीत्। तस्य पुत्रो दत्तकः, तस्य सूनुरयं माघकविरिति काव्यान्ते योजितैः कविवंशवर्णनपद्यैरवगम्यते। अयं च माघो वैश्य इति श्रूयते। महापण्डितोऽयं धाराधिपतेर्भोजस्य सभायामासीदिति भोजप्रबन्धे प्रबन्धचिन्तामणौ च विलिखितमवलोक्यते। प्रभावकचरितेऽपि चतुर्दशे शृङ्गे—

'नृपः श्रीवर्मलाताख्यः शत्रुमर्मभिदाक्षमः।
तस्य सुप्रभदेवोऽस्ति मन्त्री मिनतपाः किल॥

तस्य पुत्रावुभावंसाविव विश्वभरक्षमौ।
आद्यो दत्तः स्फुरद्वृत्तो द्वितीयश्च शुभंकरः॥

दत्तवित्तोऽनुजीविभ्यो दत्तचित्तसुधर्मधीः।
तस्य श्रीभोजभूपालबालमित्रं कवीश्वरः॥

श्रीमाघो नन्दनो ब्राह्मीस्यन्दनः शीलचन्दनः।

ऐदंयुगीनलोकस्य सारसारस्वतायितम्।
शिशुपालवधं काव्यं प्रशस्तिर्यस्य शाश्वती॥'

इति प्रभाचन्द्रेण निरूपितमिति क्लाटनामा पाश्चात्यपण्डितः प्रदर्शयति। धारानगराधिपतिर्भोजश्च क्रिस्तुसंवत्सरीये द्वादशशतके भुवमरक्षदिति केचन विश्वसन्ति। अन्ये तु एकादशशतके तत्सत्तामभिमन्यन्ते। विमर्शकास्तु ९५० क्रिस्तीयवत्सरादारभ्य १००२ इतिसंख्याकं क्रिस्तीयवर्षं यावत् भुवं शशासेति निर्णयन्ति। तथा च अयं माघकविः क्रिस्तीयदशमशताब्दीमध्यभागान्न प्राचीन इति वदन्ति।

अन्ये तु भोजप्रबन्धादिवचनं न कालनिर्णये प्रमाणीभवितुमर्हति। तत्र हि भोजराजस्य माहात्म्यनिरूपणे परं दृष्टिमाबध्नता केनापि बल्लालेन

प्राचीना अर्वाचीनाश्च कवय एकस्मिन्नेव सूत्रे ग्रथिताः। कालिदासं भवभूतिं बाणं माघं मल्लिनाथं चैककालिकं विलिखतो भोजप्रबन्धकर्तुर्वचनं कथं वयं विश्वस्याम। प्रभावकचरितमपि 'बहुश्रुतमुनीशेभ्यः प्राग्ग्रन्थेभ्यश्च कानिचित्। उपश्रुत्येतिवृत्तानि वर्णयिष्ये कियन्त्यपि' इति तत्रत्यपद्येन किंवदन्तीप्रामाण्यावलम्बेन लिखितमिति जानतामस्माकं तदपि माघकालनिर्णये न पर्याप्तं प्रमाणम्। अयं पुनर्माघकविः,

'अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा॥'

इति द्वितीयसर्गस्थपद्ये वृत्तिन्यासौ स्मरति। स्मर्येते च काव्यालंकारसूत्रकृता वामनेन। काशिकावृत्तिश्च क्रिस्तीयषष्ठशताब्दीपश्चिमभागे भारतखण्डमागतेन चीनयात्रिकेण तदा सुप्रसिद्धेत्युच्यते। तद्व्याख्यानरूपो न्यासग्रन्थश्च क्रिस्तीयषष्ठशताब्द्यामवतीर्ण इति विश्वस्यते। काव्यालंकारसूत्रकर्ता वामनश्च जयापीडस्य मन्त्री क्रिस्तीयाष्टमशताब्द्यन्तिमभागे आसीदिति प्रमाणैः प्रमीयते। अतोऽयं माघकविः क्रिस्तीयायाः षष्ठशताब्द्या न प्राचीनः, नाप्यष्टमशताब्दीतोऽर्वाचीन इति निर्णयन्ति।

अत्रेदमवधेयम्—माघेन स्मृतायाः काशिकावृत्तेः कर्तुर्वामनादन्य एव माघं स्मरन्काव्यालंकारसूत्रकर्ता वामनः। वृत्तिपदेन शाकटायनीयाया अमोघवृत्तेः, न्यासशब्देन तद्व्याख्यानस्य न्यासग्रन्थस्य च ग्रहणमिति केषांचन प्रत्यवस्थानं तु न स्थास्यति; यतः 'अपस्पशा' इति पस्पशाह्निकं स्मर्यते। पस्पशा च पाणिनीयस्य पतञ्जलिकृतस्य महाभाष्यस्येति सुस्पष्टं शाब्दिकानाम्। मल्लिनाथमहोपाध्यायोऽपि 'न्यासो वृत्तिव्याख्यानग्रन्थविशेषः' इति, 'वृत्तिः काशिकाख्यसूत्रव्याख्यानग्रन्थविशेषः' इति च न्यासवृत्तिशब्दौ व्याचष्टे। चीनयात्रिकेण प्रस्तुतामपूर्णां काशिकावृत्तिमयं माघकविः स्मरतीति पक्षोऽपि, न्यासपदस्वारस्यपर्यालोचनायां स्वरसतश्च न प्राबल्यपरिपूर्णः। एवं च 'काव्यालंकारसूत्रवृत्तिकर्तुर्वामनादन्य एवैष इति विषयोऽपि निःसंशयसमर्थनामतीवाकाङ्क्षते। प्रायशः क्रिस्ताब्दीये अष्टमे नवमे वा शतके काशिकावृत्तेः पूर्तिरासीदिति नवीनविचारणाविशारदानां मतम्' इति कस्यचन विमर्शकमूर्धन्यस्य वचनमपि नातीवादरार्हं भवति।

प्र—माघकवेः कवितामधिकृत्य युष्माकमाशयं विलिखत।

उ—माघकवेः कविता न कालिदासस्येव केवलं प्रसन्नमधुरा; नापि श्रीहर्षस्येव एकान्ततः कठिनतमा। न वा भारवेरिव प्रौढार्थप्रकाशा। परं तु 'नैकमोजः प्रसादो वा रसभावविदः कवेः' इति तदुक्तरीत्या वर्णनीयविषयादिवैलक्षण्यानुरोधेन क्वचित्प्रसन्ना, क्वचन ओजस्विनी च माघकवेः कविता भवति। बालव्युत्पादनापेक्षयापि स्वस्य सकलदर्शनरहस्यवेदिताप्रकाशनमेव शिशुपालवधकाव्यनिर्माणस्य प्रधानं फलं मन्यमान इवायं माघकविस्तत्र तत्र सांकेतिकानि प्रयुञ्जानः पदानि, यथाकथंचिदुपमानादिभङ्गचा तत्तच्छास्त्रसिद्धान्तसारांस्तत्र तत्र संघटयन्, स्वकीयां निरर्गलप्रसरां सरस्वतीमाकुलां कलयतीति वक्तव्यं भवति। भट्टिकविरिव इदंपरतया नूनमप्रवृत्तोऽपि पाणिनीये कृतभूरिपरिश्रमोऽयं कविपण्डितो व्याकरणसंस्कारविशेषपरिपूतानि प्रौढानि रमणीयानि च पदानि बहुशः संग्रथ्नन्, पदविद्यापक्षपातिनामसाधारणं बहुमानपात्रं भवति पण्डितानाम्। 'माजीवन्यः' इति, 'तस्याजननिः' इति 'हासकरमघटत' इत्येवंजातीयकाः संदर्भाननुचिताः प्रयोगा माघादितरत्र महाकविप्रबन्धे न खलु सुलभा भविष्यन्ति। प्रथमे 'माङ्याक्रोशे' इति तृतीये 'नञो नलोपस्तिङि क्षेपे' इति चोपसंख्यानम्, द्वितीये 'आक्रोशे नञ्यनिः' इति सूत्रं च प्रवर्तयन्नयं माघो नूनमितरवैलक्षण्यमात्मनः संपादयति। 'शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते' इत्यात्मना लिखन्नपि, सौशब्द्यगुणे बहुमानमावहन्नसौ माघः शब्दे परं विशिष्य दृष्टिमाबध्नाति। अनुप्रासयमकादिषु शब्दालंकारेषु, अर्थालंकारेषु विशिष्योत्प्रेक्षातिशयोक्त्योश्च महती प्रतिपत्तिर्माघकवेः। अन्येषां कवीनामिव नास्य माघकवेर्यमकादिप्रयोगे, कश्चन सर्गः, कापि वर्णना, किमपि प्रकरणं वा प्रतिनियतमवलोक्यते। बहुनिघण्टुपरिशीलनार्थः प्रयासश्च प्रायेण माघकाव्यं परिचिन्वतां विद्यार्थिनां लघूभविष्यति। तथा खल्वनेन महाकविना सुबहून्यपूर्वाणि पदानि प्रयुज्यन्ते। इममेवाभिसंधिं मनसिकृत्य 'नवसर्गे गते माघे नवशब्दो न विद्यते' इत्यभियुक्ताः प्रवदन्ति। दशमसर्गमारभ्य प्रायेण वर्णनादीनि पुनरुक्तप्रायाणीत्यभिप्रायेणैव केनापि 'नवसर्गे गते—' इति व्याजस्तुतिः कृतेति केचिदुच्छृङ्खलाः।

## मध्यमशाखायां प्रथमकक्ष्या।

### भोजचम्पूः॥

प्र—भोजस्य जीवनसमयः कः?

उ—शिलालेखदानपत्रादिदर्शनेन क्रिस्तुसंवत्सरेषु दशमशतकस्यान्तिमे एकादशशतकस्यादिमे च भागे जीवति स्मेति ज्ञायते।

प्र—भोजकृतानां ग्रन्थान्तराणां नामानि निर्दिशत।

उ—सरस्वतीकण्ठाभरणं नाम अलंकारग्रन्थः, पातञ्जलयोगसूत्रवृत्तिश्च भोजकृतत्वेन प्रसिध्यतः।

प्र—सुप्रसिद्धो धारानगराधिपतिरस्य चम्पूग्रन्थस्य कर्ता वा, उत अन्यो वेति सकारणं निश्चीयताम्।

उ—कालिदासः पद्यानि, गद्यानि भोजश्च रचयामासेति किंवदन्ती। सरस्वतीकण्ठाभरणे रामायणचम्पूप्रबन्धादेकमपि पद्यं नोद्धृत्योदाहृतम्। प्रायेण हि सर्वेऽप्यालंकारिका उचितेषु संदर्भेषु, 'यथा वा मम—' इति स्वकीयं पद्यमुदाहरन्तो दृश्यन्ते। न च सरस्वतीकण्ठाभरणे तथा। अतः सरस्वतीकण्ठाभरणकर्ता सुप्रसिद्धो भोजो नास्य चम्पूप्रबन्धस्य रचयितेति केचन विमर्शका मन्यन्ते॥

प्र—चम्पूग्रन्थनिर्माणे किं निमित्तमुत्पश्यति कविः?

उ—'गद्यानुबन्धरस . . . चम्पूप्रबन्धरचनां रसना मदीया॥' इति कविरेव कथयति।

प्र—इयं चम्पू रामायणमनुसृत्यैव निर्मितेति कविनैव सूचनं किमपि क्रियते वा?

उ—'वाल्मीकिगीतरघुपुंगवकीर्तिलेशैः' इति प्रथमतो वदन्नयं कविः, श्रीमति रामायणे स्थितमयोध्यादिकाण्डप्रथमपद्यप्रथमपदमेव स्वयमपि आदितो निवेश्य, अयोध्यादिकाण्डानात्मनाप्यारभते; यथा 'गच्छता मातुलकुलम्—' इति रामायणायोध्याकाण्डारम्भः, अस्मिन् चम्पूप्रबन्धेऽपि, 'गच्छता दशरथेन निर्वृतिम्—' इति तदारम्भः। एवमुत्तरत्रापि द्रष्टव्यम्।

प्र—सुपथा संचरमाणाः, शीकरमालभारि, क्षणदाचराणां मिषतामेव निष्पादित . . . . , पिधातुमनसाम्,

अत्र व्याकरणटिप्पणी दीयताम्।

उ—सुपथा इत्यत्र 'ऋक्पूरप्—' इति समासान्तः अप्रत्ययो न भवति, 'न पूजनात्' इति निषेधात्। तेनैव तृतीयान्तेन योगात् संपूर्वकचर-धातोरात्मनेपदं शानच्—संचरमाणा इति। 'समस्तृतीयायुक्तात्' इति पाणिनीयं सूत्रम्।

शीकरमालां बिभर्तीति विग्रहे भारिशब्दे परतः मालाशब्दस्य ह्रस्वो भवति। 'इष्टकेषीकामालानां चिततूलभारिषु' इति पाणिनेः सूत्रम्।

क्षणदाचराणां मिषतामेवेत्यत्र 'षष्ठी चानादरे' इति सूत्रेण षष्ठी; मिषतः क्षणदाचराननादृत्येत्यर्थः।

पिधातुमनसामित्यत्र पिधातुं मनः येषां ते तेषामिति विग्रहः कार्यः। अपिपूर्वकात् 'धा' धातोः तुमुनि अपिधातुमित्यत्र, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति अकारलोपे पिधातुमिति रूपम्। ततः मनःशब्दे परतः 'तुं काममनसोरपि' इति तुमुनो मकारलोपः।

---

मध्यमशाखायां द्वितीयकक्ष्या।

किरातार्जुनीयम्॥

प्र—भारविमधिकृत्य यज्जानीथ, तल्लिखत।

उ—भारविर्बाल्य एव सुप्रसिद्धः पण्डितो बभूव। सर्वेऽपि तमनितरां प्रशंसावादैरभ्यनन्दन्। तस्य पिता परं विनयातिशयमभिलषन्, सर्वदापि मूर्खमिव तमधिक्षेपाक्षरैर्व्याकुलयामास। तं चासकृदधिक्षेपमसहमानो भारविः, स्वपितरं शिलापातेन हनिष्यामीति संकल्प्य, कदाचिन्निशीथिन्यां पितुः शयनगृहोपरि निगूढमवस्थाय, पूर्वमेवानीतां करे कृतां महतीं शिलां पितुः शिरसि पातयितुं कालं प्रतीक्षमाणोऽवर्तत। तदानीं च पित्रोर्विस्रब्धं किमपि किमपि जल्पतोर्भारविविषयोऽप्यभ्यन्तरः संवृत्तः। तदा च पितुरान्तरमभि-

प्रायमवगत्य नितरामनुशयाविष्टहृदयोऽसौ भारविः कथंचिदात्मानमवष्टभ्य, गृहोपरिभागादवरुह्य, आत्मीयमन्यायसंभिसंधिसपरार्धं च विज्ञाप्य सर्वात्मना पितरं क्षमामयाचत । ततश्च तुष्टेन जनकेन

'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥'

इति पद्यमप्युपदिश्य, महतीभिराशीर्भिरभिवर्धितोऽभूदयं महाकविर्भारविः ।

अत एव तदिदं पद्यम्; एकोनषष्टिपद्यवाटिके द्वितीये सर्गे हार इव नायकमणिस्त्रिंशश्लोकत्वेन महाकविना विनियोजितमिति ऐतिह्यवादिनो वदन्ति । भारविश्चायम्

'येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः ॥'

इति कस्मिंश्चन प्राचीनलेखे स्मर्यते । अयं च लेखश्चालुक्यवंशोद्भवस्य पुलकेशिनृपतेरिति ज्ञायते । एतल्लेखलेखनकालश्च सप्तपञ्चाशदधिकपञ्चशतसंख्यापरिमितः (५५७ शकवर्षाः) शकसंवत्सर इति क्रिस्तीयवर्षेषु पञ्चत्रिंशदधिकषट्शततम इति (६३५ A.D.) सिध्यति । कालिदाससमकक्ष्यतारोहणम्, उपमानतया परिग्रहश्च कस्यचन न खलु सद्य एव संभवतीति कियानिव प्राचीनः कालोऽप्यपेक्षणीय इति वस्तुतत्त्वे विमृश्यमाने, भारविरयं महाकविः क्रिस्तीयषष्ठशताब्द्यन्तिमभागान्नार्वाचीन इति निश्चेतुं शक्यत इति विमर्शका विश्वसन्ति ।

अस्य च भारवेः 'छत्रभारविः' इति बिरुदमपि प्रसिद्धमासीत् । तस्य च मूलम् काव्यस्यास्य पञ्चमे सर्गे—

'उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिजसंभवः परागः ।
वात्याभिर्वियति विवर्तितः समन्तादाधत्ते कनकमयातपत्रलक्ष्मीम् ॥'

इति सरसमधुरोत्प्रेक्षामनोहरं पद्यमिति कथयन्ति ।

प्र—भारवेरभिमतं वृत्तम्, अङ्गः, अलंकारश्च किम्?

उ—'वृत्तच्छत्रस्य सा कापि वंशस्थस्य विचित्रता ।
प्रतिभा भारवेर्येन सच्छायेनाधिकीकृता ॥'

इति सुवृत्ततिलके क्षेमेन्द्रः । अतोऽस्य भारवेर्वंशस्थवृत्तमभिमतं स्यादिति तर्कयन्ति ।

लक्ष्मीपदमस्याभिमतोऽङ्कः । अयं हि भारविः प्रतिसर्गमन्तिमे पद्ये नियमेन लक्ष्मीपदं प्रयुङ्क्ते । अत एवास्य किरातार्जुनीयकाव्यस्य 'लक्ष्म्यङ्कम्' इति व्यपदेशोऽपि प्रथते ।

अलंकारस्तु अर्थान्तरन्यास एवाभिमत इति संभावयन्ति । यतोऽयं भूयसा तमेनमलंकारमतिरमणीयमात्मकाव्यमारोपयति ।

प्र---एतत्काव्यकथाभागस्य आकरग्रन्थः कः?

उ---महाभारतम्। इयं हि पाशुपतास्त्रस्वीकरणकथा श्रीमति महाभारते वनपर्वणि श्रूयते ।

प्र---अस्मिन् काव्ये कति सर्गा विद्यन्ते?

उ---अष्टादश सर्गाः सन्ति ।

प्र---महाकाव्यलक्षणं किम्? अस्मिन्काव्ये तल्लक्षणमस्ति वा?

उ---'नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम् ।
उद्यानसलिलक्रीडामधुपानरतोत्सवाः ॥
विप्रलम्भो विवाहश्च कुमारोदयवर्णनम् ।
मन्त्रद्यूतप्रयाणाजिनायकाभ्युदया अपि ॥
एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमुच्यते ।'

इति महाकाव्यलक्षणमामनन्ति । प्रथमद्वितीययोर्मन्त्रस्य, चतुर्थे शरदृतोः, पञ्चमे हिमाद्रेः, अष्टमे उद्यानसलिलक्रीडयोः, नवमे चन्द्रार्कोदयमधुपानरतोत्सवानाम्, पञ्चदशादिषु सर्गेषु आजिनायकाभ्युदययोश्च वर्णनादिदं महाकाव्यमेव । अत्र केषांचन वर्णनानामभावेऽपि महाकाव्यत्वं न हीयते, 'एषामष्टादशानां यैः कैश्चिदूनमपीष्यते' इति लक्षणकारैरभिधानात् ।

प्र---एतत्काव्यमनुसृत्यैव माघकविः शिशुपालवधकाव्यं विरचयामासेति विश्वस्यते । अत्र युष्माकमभिप्रायः कः?

उ---माघकविः किरातार्जुनीयमनुरुध्यैव स्वकाव्यं निर्ममे इति संभावना युज्यत एव; यतो माघकविर्भारविरिव स्वकाव्यं श्रीशब्दमादौ विनिवेश्य

वंशस्थवृत्तेन प्रक्रमते । 'श्रियः कुरूणाम्' इति, 'श्रियः पतिः' इति च किलोभयोरपि काव्ययोरारम्भः । द्वितीये च सर्गे उभयोरपि काव्ययोर्नीतिशास्त्ररहस्यं रसवतया विन्यस्यते । महाकाव्यत्वापादकानि कतिचन वर्णनानि चोभयोरप्येकोदराण्युपलभ्यन्ते । भारविः स्वकाव्ये लक्ष्मीपदमिव माघोऽपि शिशुपालवधे श्रीपदमङ्कतया विनिवेशयति । 'भारवेस्तु कथा तावद्यावन्माघस्य नोदयः' इति च प्राचीना वार्ता । अतश्च माघो भारविमनुसरतीति व्यक्तम् ।

प्र—किरातार्जुनीयमिति काव्यनाम्नः औचित्यं विचारयत ।

उ—किरातो नाम किरातवेषधारी भगवान्भूतनाथः । किरातश्च अर्जुनश्च किरातार्जुनौ, तावधिकृत्य कृतं काव्यं किरातार्जुनीयम् । पाशुपतास्त्रमधिगन्तुं तपस्यतो मध्यमपाण्डवस्य, तद्धृदयपरीक्षाद्यर्थं किरातवेषमास्थितवतः परमेश्वरस्य च चरितमत्र संग्रथ्यत इति काव्यनामधेयमुचितमेव ।

प्र—भारवेः कवित्वयोग्यतां प्रति युष्माकमाशयं विलिखत ।

उ—शब्दार्थयोरुभयोरप्येककालं दृष्टिं निक्षिपद्भिरर्वाचीनैः कविभिः कृतानां काव्यानां स्वरूपावगमाय, तत्र नवीनावस्थापरिग्रहप्रथमावस्थापरिज्ञानाय चेदं काव्यं कल्पेतेति वचनं न खल्वसांप्रतं भवति । महाकवेरावश्यकानि तत्तत्पदपदार्थसंघटनचातुर्यम्, आरब्धस्याङ्गिनो रसस्य रसान्तरैरनभिभूयमानतया निर्वहणम्, तत्तद्वस्तुयाथार्थ्यसमीक्षणम्, सूक्ष्माणामपि तात्तात्कालिकानां मनोविकाराणामवधारणम्, तत्तत्संदर्भानुगुणानामलंकाराणामायोजनम्, उक्तिप्रत्युक्तिवैचित्र्यविन्यसनम्, इत्यादीनि उपकरणानि चास्मिन्काव्ये तत्र तत्र प्रस्फुटानि परिलक्ष्यन्ते । अस्मिंश्च काव्ये पदानि न नैषधकाव्य इव केवलं कठिनानि, नापि कालिदासकाव्य इव एकान्ततः सरलानि ; परं तु प्रसन्नौजस्वीनि । यावदर्थपदैवावगम्यतेऽस्य कविताशिल्पसरणिः । एकैकमप्यत्र पदं पद्यं वा बहूनर्थानासूत्रयदेव परिदृश्यते । वर्णनादिषु च नायं कविः सहृदयोद्वेगकरीं दीर्घदर्शितामाश्रयति । उत्तमोत्तमुपमानिबन्धनमपि कालिदाससंनिकर्षमस्य कवेरप्रयासं संपादयति । परिदृश्यमानस्य पदार्थजातस्य स्वरूपस्वभाववर्णने त्वयं कविर्भवभूतिमप्यतिशेत इत्यत्र चतुर्थसर्गस्थं ग्रामोपशल्यक्षेत्रादिवर्णनमेव परमं प्रमाणं भवितुमर्हति ।

युधिष्ठिरभीमसेनयोः, इन्द्रार्जुनयोः, कुमारपाण्डवयोश्च उक्तिप्रत्युक्तिवैचित्र्यं पश्यतां सहृदयानाम् अयं भारविरपरो बाण इत्येव नियतं प्रतिभास्यति चेतसि। यमकबन्धमये पञ्चदशे सर्गे परिक्रीडमानाप्यस्य कविता नातीव नैसर्गिक-परिस्यन्दपद्धतिमतिवर्तते। अस्मिंश्च काव्ये रसालपाकमास्वादयन्तो विमर्शकाः 'नालिकेरफलसंमितं वचो भारवेः' इति वदन्तं मल्लिनाथमश्रद्धेयवचनमाकलयन्ति।

प्र—'भारवेरर्थगौरवम्' इति प्रवादस्य कोऽभिप्रायः? इदं च सनिदर्शनं स्फुटयत।

उ—संक्षिप्तपदानामपि पद्यानां बह्वर्थगर्भितत्वम्, वर्ण्यमानस्यार्थस्य अक्षुद्रत्वं चार्थगौरवमित्यभिप्रयन्ति कतिपये। केचित्तु अर्थान्तरन्यासमाहिमैव तदिति संगिरन्ते। तत्र प्रथमकल्पे—'निरत्ययं साम न दानवर्जितम्—' 'द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः सुमर्षणः—' 'अद्य क्रियाः कामदुघाः क्रतूनाम्—' इत्यादीनि निदर्शनानि। द्वितीयपक्षे तु—'हितं मनोहारि च दुर्लभं वचः' 'विपदन्ता ह्यविनीतसंपदः' इत्यादीनि निदर्शनानि।

प्र—अत्र काव्ये किं नाम फलं प्रधानभूतमभिमतम्?

उ—अत्र च

'नेता मध्यमपाण्डवो भगवतो नारायणस्यांशज-
स्तस्योत्कर्षकृते त्ववर्ण्यततरां दिव्यः किरातः पुनः।
शृङ्गारादिरसोऽङ्गमत्र विजयी वीरः प्रधानो रसः
शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम्॥'

प्र—काव्येन ईदृशेन भाव्यमिति, स्वकीयं काव्यमीदृशमिति वा यत्र कुत्राप्यपि नाम सूचयति महाकविरयं भारविः?

उ—द्वितीयसर्गे—

'स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्॥
उपपत्तिरुदाहृता बलादनुमानेन न चागमः क्षतः।
इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः॥'

इत्यनेन, तथा एकादशे सर्गे--

'प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम् ।
साकाङ्क्षमनुपस्कारं विष्वग्गति निराकुलम् ॥
न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे ।
अप्रकम्प्यतयान्येषामाम्नायवचनोपमम् ॥
अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम् ।
औदार्यादर्थसंपत्तेः शान्तं चित्तमृषेरिव ॥
इदमीदृग्गुणोपेतं लब्धावसरसाधनम् ।
व्याकुर्यात्कः प्रियं वाक्यं यो वक्ता नेदृगाशयः ॥'

इत्यनेन च ईदृशगुणोपेतमेव काव्यमिति, स्वकीयं च काव्यमीदृग्गुणोपेतमिति च सूचयति भारविरिति सहृदयसमाजो मन्यते ।

---

## मध्यमशाखायां द्वितीयकक्ष्या ।

### भारतचम्पूः ।

प्र--चम्पूग्रन्थस्य किं लक्षणम्? अन्यांस्त्रीन् चम्पूग्रन्थान् नाम्ना निर्दिशत।

उ-- 'गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते' इति चम्पूलक्षणमाहुः - भोजचम्पूः, भागवतचम्पूः, नलचम्पूः, इत्यादयश्चम्पूग्रन्थाः प्रसिद्धाः ।

प्र--अनन्तभट्टचरितं यावदवगतं विलिखत।

उ--भोजकृतस्य रामायणचम्पूप्रबन्धस्य शेषं पूरितवन्तं युद्धकाण्डकर्विं लक्ष्मणसूरिं परिहसितुं प्रवृत्तेऽयमनन्तभट्टः । तदा लक्ष्मणसूरिः 'गच्छत एव हि स्खलनम्, न तु तिष्ठतः । त्वं हि स्वयं किमपि वाङ्मयमसृजन्, किमित्येवं परपरिवादाय प्रवृत्तोऽसि । अस्ति चेत् तव कवित्वकौशलम्, प्रदर्श्यतां तत्' इति सक्रोधमनन्तभट्टमधिचिक्षेप । तथा पुनरधिक्षिप्तोऽयमनन्तभट्टः, तत्संघर्षेणेमं भारतचम्पूग्रन्थं निर्मितवानिति वृद्धपण्डितपरंपरा विश्वसिति । किं चायमनन्तभट्टः प्रथमे वयसि नितरामज्ञ आसीत् । कदाचित् सह भ्रातृभिः पण्डितैर्भुञ्जानोऽयमनन्तभट्टः, दध्यानयनाभिलाषेण स्वपत्नीम् 'दधिमानय'

इति वदन् भ्रातृणामुच्चैर्हासस्य निमित्तं बभूव। तदवगत्य नितान्तं दुःखमापन्ना विदुषी अनन्तभट्टपत्नी 'दध्यानयनं मास्तु' इति स्वपतिनोक्तमिति बोधयन्ती 'दधि मा आनय' इति तत्र पदच्छेदं सूचयन्ती, तक्रमानीय पर्यवेषयत्। अवलोक्य चेदमन्ये भ्रातरः स्वेषामेव स्खलितं मन्वाना व्रीडाविलक्षा बभूवुः। भोजनानन्तरं च सर्वमिदमात्मदारैरवगमितोऽयमनन्तभट्टः, तदानीमेव देशान्तरं प्रस्थाय तत्र सर्वाः कला अधिगत्य तत्र तत्र राजकुलेषु सभाजितः स्वीयमावासमाससादेति दाक्षिणात्यपण्डितमण्डले कापि किंवदन्ती अद्यापि विद्योतते।

प्र—अस्य कवेः रीतिः कीदृशीति सनिदर्शनं परीक्ष्यताम्।

उ—अयमनन्तभट्टः, अनुप्रासयमकादिषु शब्दालंकारेषु भूयसीं श्रद्धां प्रदर्शयति। पद्यापेक्षयापि गद्ये भूयान् शब्दालंकारादरः परिदृश्यते। अर्थालंकारेष्वपि उत्प्रेक्षातिशयोक्त्योरेव महती प्रतिपत्तिरवलोक्यते। अतिशयोक्तिश्च प्रायेण न मनोरमा। प्रतिपादं द्वितीयाक्षरैक्यसंपादने च महदस्य कुतूहलं पश्यामः। पदानि च प्रायेण नाप्रयुक्तानि, नापि परुषाणि; परं सरलानि, संदर्भोचितानि च। बहुत्र च वर्णनानि रमणीयतराणि। मरणं तावन्मृधातुप्रयोगं विनैव भङ्ग्यन्तरेण प्रतिपादनीयमित्येवं बद्धदीक्ष इवायमाभाति। च्युतसंस्कारदोषोऽपि तत्र तत्रोपलक्ष्यतेऽस्य कवितायाम्। प्रसादाद्यपेक्षयापि ओजोगुण एवात्र समधिकः संदृश्यते। 'करटमदधुनीलोलकल्लोलमालारवेलल्लोलम्बकोलाहलमुखरितदिक्चक्रवालान्तरालम्,' 'अखिलहरिदन्तरनिरन्तरवलमानमलयपवमानकम्पितचम्पकसंपादितसौरभसंपदनुकम्पितनिलिम्पपथाः' 'कुरवके रवकेलिभृतः सुधासममधुरं मधुरं मधु षट्पदाः। पपुरवापुरवार्यमपि स्मयं नृपवने पवनेरितपादपे॥" इत्यादिषु अनुप्रासयमकयोरवस्थितिरवलोकनीया।

'कुरङ्गयूनां कुरुते स्म मीतिं गुरोः कुलस्यामृतदीधितेर्नः। सजातिरेषां तनुते कलङ्कमितीव रोषादिषुभिः स पाण्डुः॥' इत्यादावुत्प्रेक्षा, 'चित्रं दिदर्शयिषुणा जनितस्य यस्यां मध्यं विनैव विधिना महिलाजनस्य। अङ्गं नितम्बजघनादि यतो यतोऽधस्तुङ्गं कुचाद्युपरि याति ततोऽनुकूलम्॥' इत्यादावतिशयोक्तिश्च रमणीया। 'यत्राङ्गनावदनयामवतीशहर्म्यचन्द्राश्मसौधगलितः सलिलप्रवाहः। बृन्दारकेन्द्रनगरीबृहदुत्सवाय मन्दाकिनीति लभते

महतीमभिख्याम् ॥ ’ ‘ आलापकालसमपल्लविनाङ्कवीणासौरभ्यपातिमधुपारवसंकुलस्य । तन्त्रीस्वनस्य समितौ तरुणीस्वरस्य जानाति यत्र चतुरोऽपि न तारतम्यम् ॥ ’ इत्यादावतिशयोक्तिस्तु न मनो रमयति । ‘ क्षोणीपतौ मदकलं प्रति कृष्णसारं तूणीमुखे पतितपाणिनखाङ्कुरेऽस्मिन् । एणीकुलानि तरलैर्यमुनाजलानां वेणीमिवाक्षिवलनैर्विपिने वितेनुः ॥ ’ इत्यादिषु द्वितीयाक्षरप्रासरामणीयकमवगन्तव्यम् । ‘ व्यत्यास्यतां ताविव यौनकैस्ते ’ इत्यादौ च्युतसंस्कारदोषोऽप्युपलभ्यते । ‘ हिडिम्बमेनं यमराजधानीकुटुम्बिमुख्यं कुरुते स्म भीमः ’ इत्येवंप्राया गमनिकैव मरणविषये उपयुज्यते । पदसारल्यस्य, ओजोगुणस्य, वर्णनानैपुणस्य च पूर्वोदाहृतानि पद्यान्येव निदर्शनतामुपगच्छन्ति । इत्थं सर्वतोऽपि विमृश्यमाने, भारतचम्पूरियं समीचीनेषु चम्पूग्रन्थेषु परिगणनामर्हतीत्येव वक्तव्यं भवति ।

प्र—तुल्यार्थे पर्यवसायिनौ द्वौ प्रत्ययौ विलिखत ।

उ—कल्पप्प्रत्ययः, देश्यप्रत्ययः, देशीयप्रत्ययो वा ।

प्र—‘ माध्वीलिहः पूर्वमिवोपयाताः ’ इत्युत्प्रेक्षा कथं संघटते, ‘ वरणे चम्पकमालिका वितेने ’ इत्युत्तरत्र वक्ष्यमाणत्वात् । भ्रमरचम्पकयोर्विरोधश्च कविसमयसिद्धः । तथा च कवयः—‘ न षट्पदो गन्धफलीमजिघ्रत् । ’ इति, ‘ रूपसौरभसमृद्धिसमेतं चम्पकं प्रति ययुर्न मिलिन्दाः । ’ इति च ।

उ—अत्र विषये एवं लिखति व्याख्याता रामचन्द्रः—‘ यद्यपि वरणमालायाश्चम्पकत्वेन कटाक्षाणां भावितदपेक्षाहेतुकमधुकरत्वोत्प्रेक्षा विरुध्यते, चम्पकानां मधुकरमारकत्वेन प्रसिद्धेः ; तथापि तदानीं तदभावेन पुष्पमालात्वेन तदवतरणस्य पूर्वं मधुकराणामाशाजनने बाधकाभावान्न क्षतिरिति कवेराकूतमिति ध्येयम् ’ इति ।

परे तु कविसमयोऽपि बहुत्र भिद्यत एव । तथा च ‘ रात्रावेव उत्पलस्योल्लासः ’ इति विश्वत्र विख्यातेऽपि कविसमये, तद्विपरीततयापि कविसमयमवबोधयन्नाचार्यदण्डी ‘ इति ज्योत्स्नोत्पलायोगादयोगं नाम रूपकम् ’ इति काव्यादर्शे ज्योत्स्नोत्पलयोर्विरोधमभिप्रैति । एवमेव रामायणे पम्पासरोवर्णनावसरे दिवा पद्मानां निमीलनम्, उत्पलानामुल्लासं च निबध्यमानं पश्यामः । तथा कवितार्किकसिंहोऽपि यादवाभ्युदये यमुनावर्णनप्रकरणे इमामेव पद्धति-

मात्मनाप्यनुसरति। एवमत्रापि विषये कविसमयं द्विधा बद्धमुपलभामहे तथा च कवयः प्रबध्नन्ति —'वेलत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि। भृङ्गाः सलीलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि ॥" इति। श्रीहर्षोऽपि नैषधकाव्ये—'विचिन्वतीः पान्थपतङ्गहिंसनैरपुण्यकर्माण्यलिकज्जलच्छलात्। व्यलोकयच्चम्पककोरकावलीः स शम्बरारेर्बलिदीपिका इव ॥' इति चम्पकेषु भ्रमरसत्तां वर्णयति। अतोऽत्र न कोऽपि कविसमयविरोध इत्याहुः।

'चम्पकोपरि भ्रमरो न तिष्ठतीति केचित्। तत्र तिष्ठति। परं तु म्रियत इति प्रमाणिकाः' इति पूर्वोक्तनैषधपद्यव्याख्यानावसरे श्रीमान्नारायणभट्टो विलिखति। 'अलिस्रिया कुड्मलम् —' इति नैषधप्रथमसर्गस्थपद्यव्याख्यानावसरेमल्लिनाथोऽप्येवमेव निरूपयति।

---

मध्यमशाखायां द्वितीयकक्ष्या ॥

मेघसंदेशः ॥

प्र—मेघसंदेशरीतिमनुसृत्य कृतेषु संदेशकाव्येषु द्वयोर्नाम निर्दिशत।

उ—श्रीवेदान्तदेशिकविरचितो हंससंदेशः, उद्दण्डशास्त्रिविरचितः कोकिलसंदेशश्च मेघसंदेशोपजीविनौ ॥

प्र—प्रायेण संदेशकाव्येषु मन्दाक्रान्तावृत्तादरणे को नु हेतुः स्यात्?

उ—मन्दाक्रान्तायां प्रतिपादं प्रथमतः चतुर्षु, पश्चात् षट्सु, परतश्च सप्तस्वक्षरेषु यतेर्विद्यमानतया विरहविक्लबस्य नायकस्य संदेशावसरे क्रमेण किंचिद्विलम्ब्य विलम्ब्य निश्वासविच्छेदः सुकर इति तदिदं वृत्तमानुभाविकेन कविना समनुसृतमिति वदन्ति। अधिकं तु अस्मदीयविद्युल्लताभूमिकायामवसेयम् ॥

प्र—"हनुमत्संदेशं मनसि निधाय कविः काव्यं कृतवानित्याहुः" इति मल्लिनाथः। अत्र युष्माकमभिप्रायः कः?

उ—महाकवयो हि गूढतया वापि महापुरुषवर्णनाभिसंधिं विना यत्किंचिद्वर्णयितुं न प्रवर्तेरन्। कालिदासश्च स्वकीयमान्तरमभिसंधिं प्रदर्शयितुकाम

एव 'जनकतनयास्नानपुण्योदकेषु' 'रामगिर्याश्रमेषु' 'रघुपतिपदैरङ्कितम्' 'दशमुखभुजोच्छ्वासितप्रस्थसंधेः' 'इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा।' इत्यनेकत्र रामायणं स्मरति। किंच, रामायणोक्तमेव हनूमतो गज-पर्वतशृङ्गादिसादृश्यं कामरूपत्वं च मेघेऽप्यत्र योजयति। सुग्रीवकथितं वानरगमनमार्गमनुस्मारयति। सुवेलस्थितां लङ्कामिव कैलासमधिष्ठितामलकामालोचयति। हनूमतो लङ्कायामिव मेघस्यालकायां सायं प्रवेशं समर्थयति। हनूमत इव रात्रौ तनुतनूकरणपूर्वकं मेघस्य संदेशार्थकथनं संगमयति। अशोकवनिकामध्यवर्तिन्या अशरणाया जानक्या अतिकरुणामवस्थां वर्णयन्तमनुसृत्य वाल्मीकिम्, अन्यूनानतिरिक्तं तदुक्तानि मैथिलीविशेषणान्येव प्रकृतेऽपि नायिकायां घटयति। संदेशप्रघट्टकस्थितमेवाभिज्ञानदानमत्राप्यन्तर्भावयति। ततश्च महाकवेर्मनसि हनूमत्संदेशो नियतं विपरिवर्तित इति तर्कयितुं शक्यते। अधिकं तु विद्युल्लताभूमिकायाम्॥

प्र- मेघसंदेशेन कानि काव्यफलानि निष्पेयुः?

उ—अत्रैवं विलिखति पूर्णसरस्वती—अत्र तावन्मृदुलसरसचेतसां व्युत्पाद्यानामक्लेशेनैव विशिष्टशब्दार्थव्युत्पत्तिः, तत्तद्देशविशेषव्यवहारवेदनम्, पुण्यतीर्थदेवतायतनादिसंकीर्तनेन दुरितक्षयः, कीर्तिरलघीयसी, राजादिवल्लभतया द्रविणसंपत्तिः, कामसूत्रादिविद्यासु गीतादिकलासु च कौशलम्, संभोगविप्रलम्भरूपशृङ्गारसागरकर्णधारत्वम्, सहृदय इति सदसि सत्कृतिः, मन्दीकृतपरब्रह्मानन्दसंदोहश्च रसास्वाद इति परःशतानि प्रयोजनानि। किं च सकलपुमर्थसाधनसमर्थमुपदेशरत्नं च; यथा—महात्मनोऽपि यक्षस्य महिलासङ्गतरङ्गितानङ्गरसपारतन्त्र्यस्य स्वाधिकारप्रमादः, तेन स्वामिकोपः, तस्माच्छापोपलम्भः, ततः स्वमहिमभ्रंशः, प्रियावियोगवेदनासंतानानुभवश्चेत्यनर्थपरंपरा संपतिता। अतो विषयेष्वतिसक्तिरनर्थायेति॥

प्र -कालिदासस्य जन्मभूमिम्; स्त्रीविद्याभ्यासं चाधिकृत्य अस्मात्काव्यात्किं नाम ऊहितुं शक्यते?

उ—कालिदासस्य जन्मभूमिरुज्जयिनीति ऊहितुं शक्यते। यतस्तां नगरीं स्थलान्तरेष्वकृतेन विस्तरेण परिचिततत्तत्प्रदेश इव वर्णयति। 'वक्र-

पन्थाः—' इत्यादिना कियन्तमप्यध्वश्रममविगणय्याप्यवश्यं मेघेन गन्तव्यमिति प्रार्थयते, प्रोत्साहयति च। स्त्रीविद्याभ्यासस्तदा समीचीन आसीदित्यनुमातुं पार्यते। 'उत्सङ्गे वा--' इति पद्ये 'मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा' इति यक्षस्त्रियं कवयित्रीं खलु निरूपयति।

"शेषान्मासान्विरहदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः"

इत्युक्तत्वात्पठनपाठनादिकं तदा स्त्रीणां नासीदित्यूह्यते इति केषांचनाशयस्तु नास्माकं हृदयमधिरोहति ॥

प्र—धूमज्योतिःसलिलमरुत्संनिपातात्मकस्य मेघस्य केन केनांशेन कुत्र-कुत्रोपयोगः समजनि?

उ—'धूमोद्गारानुकृतिनिपुणाः' इति, 'विद्युदुन्मेषदृष्टिम्' इति, 'सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीम्' इति, 'त्वामासारप्रशमितवनोपप्लवम्' इति, 'अर्हस्येनं शमयितुमलं वारिधारासहस्रैः' इति, 'तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन' इति चोपयोगं कविरेव प्रकाशयति ॥

प्र—ऋतुराजं वसन्तं विहाय, 'हस्ते लीलाकमलम्' इति शरदः प्रथमं ग्रहणे को नाम हेतुः?

उ—शरत्काल एव यक्षस्य शापः। यतो वर्षभोग्यस्य शापस्यावसानसमयं शार्ङ्गपाणेर्भुजगशयनादुत्थानकालमेव यक्षो निर्दिशति। उत्थानैकादशी च कार्तिकमासे। 'परिणतशरच्चन्द्रिकासु क्षपासु' इत्युपरिष्टाद्वक्ष्यति च। अतो यक्षस्य मनसि शरदेवोपस्थिता। 'या वः काले—' इति पूर्वपद्ये वर्षर्तोः स्मरणात्तदनन्तरः शरदृतुरेव यक्षस्य प्रथमं स्मृतिपथमारोढुमर्हतीति कश्चित्।

प्र—'कामरूपं मघोनः' इत्युपनिबध्यमानं मेघस्य कामरूपत्वं कुत्रोपयुज्यते?

उ—'पुष्पमेघीकृतात्मा' 'तिर्यगायामशोभी' 'सोपानत्वं कुरु' 'गत्वा सद्यः कलभतनुताम्' इति वदन्कविः कामरूपतां सफलां कलयति।

प्र—रामगिरेरलकां प्रतिष्ठमानस्य मेघस्य गमनमार्गं वर्णयत।

उ---मघोनः प्रकृतिपुरुषः कामरूपोऽयं मेघः, चिरपरिचितं रामगिरिमापृच्छ्य, मधुरं नदता सगन्धेन चातकेन समभिनन्दितागमनः, बलाकाभिरनुसेव्यमानः, आकैलासमागमिष्यद्भी राजहंसैरनुसृतः, पवनपदवीमारोहन्नलकां प्रतिष्ठते।

प्रतिष्ठमानश्च मालं क्षेत्रमारुह्य, किंचित्पश्चाद्व्रजन्, भूयोऽप्युत्तरेणैव प्रयातः, आम्रकूटं नाम सानुमन्तमधिगच्छति। ततश्च विन्ध्याटवीं विगाहमानो रेवायां तोयमादाय गच्छन्, दशार्णान्प्रविशति।

तेषु च वेत्रवत्या परिगतां विदिशां नाम राजधानीमनुप्राप्य, तस्या एव नद्याः स्वादुतमं पयः पिबन्, विश्रामहेतोर्नीचैराख्यं गिरिमधिवसति।

ततश्च प्रतिष्ठमानोऽसौ पथि निर्विन्ध्यायाः संनिपातेन रसाभ्यन्तरो भूत्वा, प्रतनुसलिलां सिन्धुमात्मना त्यक्तकार्श्यमुपपाद्य, उदयनकथाकोविदग्रामवृद्धेष्ववन्तिषु शिप्रावातशीतलसुभगां श्रीविशालामुज्जयिनीमुपसरति।

तत्र च गन्धवत्या मरुद्भिर्धूतोद्यानं चण्डेश्वरस्य धाम गत्वा, सायं महाकालनिकेतनं चन्द्रमौलिमासेव्य, भवान्या दृष्टभक्तिः, कस्यांचन भवनवलभौ तां रात्रिं नयति।

ततश्च गम्भीरायाः प्रसन्नं पयश्छायात्मना प्रविशन्नुपभुज्य, ततो देवगिरिमुपगम्य, तत्र नियतवसतिं स्कन्दं पुष्पैः स्नपयित्वा, पश्चात् रन्तिदेवकीर्तिपताकां चर्मण्वतीं नाम नदीं व्यालम्बते।

ततस्तामुत्तीर्य, दशपुरमात्मबिम्बेन संभावयन्, ब्रह्मावर्तं जनपदमधश्छायया गाहमानः, कुरुक्षेत्रं भजते।

ततः सरस्वत्या अपोऽभिगम्य, अनुकनखलं जाह्नव्या दिव्यमम्भः पीत्वा, तुषाराचलमधितिष्ठति।

तत्र च दवाग्निशमनेन वारिधारासहस्राणि सफलयन्, संरम्भोत्पतनरभसान् शरभान्करकावृष्टिपातैरवकीर्णान्निष्फलारम्भयत्नान्परिभवन्, अर्धेन्दुमौलेर्दृषदि व्यक्तं चरणन्यासं भक्तिनम्रः पर्येति।

ततो दिशमुदीचीमनुसरन्, तिर्यगायामशोभी क्रौञ्चरन्ध्रमतिक्रामति।

ततः प्रतिदिनं राशीभूतमिव त्र्यम्बकाट्टहासं स्वं श्रितत्य स्थितं कैलासमासेवते ।

तत्र च शंभुना दत्तहस्तायाः क्रीडाशैले पादचारेण विचरन्त्या देव्या गौर्या मणितटारोहणाय अग्रतः सोपानत्वमात्मनः संकल्पयन्, तस्याः प्रसादमुपलभ्य कृतार्थेनान्तरात्मना मानसं सरो विगाह्य सलिलमाददानः, स्ववातैः कल्पद्रुमकिसलयांशुकानि धून्वन्, अव्याहतं तं नगेन्द्रं निर्विशन्, अनन्तरमलकामासादयति ।

प्र – मेघस्य शब्दः कुत्र कुत्र कविनोपयोजितः?

उ—'तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ।' 'कुर्वन्संध्याबलिपटहतां शूलिनः श्लाघनीयामामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम्' 'पश्चाददिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः' 'निर्ह्रादी ते मुरज इव चेत्कन्दरेषु ध्वनिः स्यात्संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः' 'संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम्' 'वक्तुं धीरस्तनितवचनैर्मानिनीं प्रक्रमेथाः' 'यो वृन्दानि त्वरयति पथि श्राम्यतामध्वगानां मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि' इति सप्तकृत्वो मेघस्य शब्दं फलवन्तं कलयति महाकविः ।

प्र—कविरस्मिन्काव्ये यत्र कुत्रापि आत्मानमात्मकाव्यं वा प्रकृत्य किमपि सूचयति वा?

उ—'अद्रेः शृङ्गं हरति पवनः—' इति पद्यव्याख्यानावसरे मल्लिनाथ इत्थं विलिखति—'अत्रेदमर्थान्तरं ध्वनति—रसिको निचुलो नाम महाकविः कालिदासस्य सहाध्यायी परापादितानां कालिदासप्रबन्धदूषणानां परिहर्ता यस्मिन्स्थाने, तस्मात्स्थानात् उदङ्मुखो निर्दोषत्वादुन्नतमुखः सन्, पथि सारस्वतमार्गे दिङ्नागानां दिङ्नागाचार्यस्य कालिदासप्रतिपक्षस्य, हस्तावलेपान् हस्तविन्यासपूर्वकाणि दूषणानि, परिहरन्, अद्रेः अद्रिकल्पस्य दिङ्नागाचार्यस्य, शृङ्गं प्राधान्यम्, हरति किंस्विदिति हेतुना सिद्धैः सारस्वतसिद्धैर्महाकविभिः अङ्गनाभिश्च, दृष्टोत्साहः सन्, खम्, उत्पत उच्चैर्भवेति स्वप्रबन्धमात्मानं वा प्रति कवेरुक्तिरिति' इति ।

पूर्णसरस्वती तु 'एतत्कृत्वा प्रियम्—' इति पद्यव्याख्यानावसरे "एषा यक्षवचनत्वेन योजना । अथ कविवचनत्वेन योज्यते । एतत् मेघसंदेशाख्येन प्रारब्धं संपूर्णं चेदं काव्यम्, कृत्वा गुरुमुखेन शिक्षित्वा, प्रियं रससंरम्भेण सादरं निर्मितत्वात्, अनुचितप्रार्थनावर्त्मनः, सतां गुणग्रहणलोभेन स्वयमेव प्रवृत्त्युपपत्तेर्मम त्वेतन्निरीक्षणप्रार्थना अनुचितेत्यर्थः । सौहार्दात् मात्सर्यादिदोषोत्सारणविशुद्धहृदयतया, विधुरः एतद्विरचनायासक्लेशितः, अनुक्रोशबुद्ध्या दाक्षिण्येन, इष्टान् देशान् यत्र यत्र रुच्यनुरोधेन गम्यते, तत्र तत्रैतच्छीलनोन्मीलितमनीषस्य रसिकसदसि सत्कारलाभात् । जलद जलानां नीरसदुस्तार्किकाणां खण्डक, अथ वा रसातिशयजनकत्वेन सहृदयानामानन्दबाष्पजलदायिन् हे श्रोतः व्याख्यातश्च । प्रावृडिति सुखशीतलकालोपलक्षणम् । रसानुभवविनोदात्सुखायमानेन कालेन जनितशोभः । अथ वा प्रावृडिति समयवर्षिनया राजावली लक्ष्यते; तया गुणगणाह्लादितया वितीर्णधनधान्यादिलक्ष्मीयुक्तः । एवमिति, अभिनयेन पुरोवर्ती सुखदुःखाभ्यां श्लिष्टविश्लिष्टो लोक इवेति वैधर्म्यदृष्टान्तः प्रदर्श्यते । विद्युदिव चञ्चलत्वात् विशेषेण द्योतनाच्च पूर्वप्रस्तुता श्रीर्विद्युदित्यध्यवसीयते; तया वियोगश्च मा भूत् श्रीः सिध्यतु, तया सततमविरहश्च भूयादित्याशिषा श्रीशब्दप्रयोगाच्च एतत्काव्यश्रोतृव्याख्यात्रादीनामभङ्गुरमङ्गलसंपत्तिरित्यशेषमतिमङ्गलम् ।" इति विलिखति ॥

---

## मध्यमशाखायां तृतीयकक्ष्या ।

### दशकुमारचरितम् ।

प्र—दशकुमारचरितकर्तुर्दण्डिनः कालं सप्रमाणं निर्धारयत ?

उ—अत्र च बहुधा विप्रतिपत्तिर्विद्यते विदुषाम् । कश्चन पाश्चात्यपण्डित एवं विलिखति—अयं हि दण्डी दण्डवान्कश्चन संन्यासी । अनेन च वस्तुनो विषविराग्यविहीनेन प्रव्रज्यां परं गृहीतवता सहजचपलस्य स्वमनसो विनोदाय केवलं तृतीयपुरुषार्थसमर्थनकदर्थितेयं कथा समुपनिबद्धेति संभाव्यते । दशकुमारचरितग्रन्थकथाभागश्च सम्यग्विमृश्यमानः, माहम्मदाक्रान्तिदुर्भगस्य भारतखण्डस्याधरोत्तरामतिशोचनीयामवस्था-

मवबोधयतीत्यनुमातुं शक्यते । भारते महती माहम्मदाक्रान्तिश्च क्रिस्तुवर्षीयदशमैकादशशतकयोरेव समभूदिति सुस्पष्टं चरित्रवेदिनाम् । किं चायं दण्डी भोजराजसदसि सभाजितोऽवर्ततेति, तात्कालिकः कश्चन भोजवंशीयो विगीतचरितो राजकुमार एव कविनानेन विश्रुतचरितमुपनिबध्नता मनसि गूढमाकलित इति च सर्वतः प्रवादः प्रथते । भोजराजश्चायं क्रिस्तीयायामेकादशशताब्द्यामासीदिति ज्ञायते । ततश्चायं दण्डी क्रिस्तुवर्षीयैकादशशतकान्न प्राचीन इत्येवमभ्युपगन्तव्यं भवतीति ।

अपरोऽपि कश्चन पाश्चात्यपण्डितः किमपि ताम्रशासनं प्रमाणीकृत्य दण्डिनः कालं निर्धारयितुं प्रयतते । तत्किल ताम्रशासनं बलगलदेशे समुपलब्धम्; यत्र च ११२८ इतिसंख्याके क्रिस्तीयसंवत्सरे समुत्पन्नं श्रीवर्धनं नाम जैनकविं प्रशंसदेकं दण्डिनः पद्यमुत्कीर्णमवलोक्यते । ततश्चायं दण्डी क्रिस्तीयद्वादशशताब्दीप्रथमभागान्न प्राचीन इति विश्वसनीयमापततीति ।

भारतीयाः पण्डितास्तु—आचार्यदण्डी नामायं कालिदाससमकालिको भोजराजसभायामासीदिति भोजप्रबन्धादितो जानीमः । एवं हि चिरादनुश्रूयते—पुरा किल दण्डिकालिदासयोः स्वस्वोत्कर्षविशेषसंघर्षेण विवदमानयोः 'कः कविः' इत्ययं विषयो विनिश्चेतव्यो बभूव । तदा च यन्त्रघटादिस्थापनपूर्वकं सपर्याभिः संपूजिता देवी भगवती भारती तमेनमर्थमनुयुक्ता सुप्रसन्ना सदसि 'कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः' इत्युत्तरेणानुजग्राह । श्रुत्वा चैतन्नितरां रोषाकुलो विषादविवशः कालिदासः 'अहं तु रण्डे' इति साक्षेपं सभायां सरस्वतीं पप्रच्छ । ततश्च 'त्वमेवाहं त्वमेवाहं त्वमेवाहं न संशयः' इति तस्य प्रश्नस्योत्तरमदाद्देवी भारती । पुनरप्येकदा ब्राह्मणकन्याभूमिकां परिगृहीतवत्या सरस्वत्या ताम्बूलचर्वणायै सुधां दण्डिकालिदासाभ्यां प्रार्थितया 'कालिदासाय कवये दण्डिने पण्डिताय च' इति स्वपितरं प्रत्याभिदधानया च्छिन्नसंशयाविमावुभावप्यभूतामिति । तथा च कालिदासस्य योऽयं कालो निश्चीयते, स एवास्यापि दण्डिन इत्यकामेनाप्यगत्या स्वीकरणीयं भवतीति साग्रहं प्रत्यवतिष्ठन्ते ।

विमर्शकास्तु—भामहेन काव्यालंकारे निरूपितं मतं यथा दण्डिना काव्यादर्शे दूषितमवलोकयामः, तथैव दण्डिनो गमनिकामपि काव्यालंकारसूत्रग्रन्थे वामनेन भामहमनुसरता परास्तां पश्यामः काव्यालंकार-काव्यादर्शकाव्यालंकारसूत्राणि त्रीण्यपि सुसूक्ष्मं विभावयतां सहृदयानामयमर्थः स्फुटीभविष्यति। तेषां च त्रयाणां पौर्वापर्यमप्यत एव निर्णेतुं पार्यते। काव्यालंकारसूत्रकर्ता वामनश्च श्रीमतः कश्मीराधिपतेर्जयापीडस्य मन्त्रीति 'मनोरथः शंखदत्तश्चटकः संधिमांस्तथा। बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः॥' इति राजतरङ्गिणीपद्यात्प्रतीयते; जयापीडश्च ७७९ इतिसंख्याकं क्रिस्तीयवत्सरमारभ्य ८१३ इतिसंख्याकक्रिस्तीयसंवत्सरपर्यन्तं भुवं शशासेति कश्मीरदेशचरितग्रन्थतो ज्ञायते। किंच, क्रिस्तुवर्षीयाष्टमशतकान्तिमभागस्थितेन षट्प्रबन्धीकर्त्रा महाकविना राजशेखरेण 'त्रयोऽग्नयस्त्रयो वेदास्त्रयो लोकास्त्रयो गुणाः। त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः' इति स्मर्यतेऽयं दण्डी। अपि च, अनेन दण्डिना कृतस्य काव्यादर्शस्य कर्णाटकभाषया कमपि विपरिवर्तं क्रिस्तीयनवमशताब्द्यामवतीर्णमवगच्छामः। स हि कर्णाटकभाषामयो विपरिणामः, क्रिस्तुवर्षीयनवमशतकमध्यभागवर्तिनं राष्ट्रकूटदेशाधिपतिं श्रीमन्तममोघवर्षं विषयीकरोतीति, तस्य चालंकारग्रन्थस्य 'कविराजमार्गः' इति व्यपदेश इति च कर्णाटकभाषाचरित्रवेदिनो निरूपयन्ति। एतद्विमर्शेन च नवमशताब्दीमध्यभाग एव दण्डिनः सुमहती ख्यातिरासीदित्यूहनीयं भवति। किं च क्रिस्तीयाष्टमशताब्दीमध्यभागे शैवमताभिमानिनः पल्लवाख्याः कतिपये क्षत्रियाः काञ्चीनगरीमपालयन्निति, तेष्वन्यतमो राजकुमार एनं दण्डिनमाचार्यं विद्यागुरुत्वेन वरयामासेति चैतिह्यश्रद्धालवो विश्वसन्ति। काव्यादर्शे चायं दण्डी क्रिस्तीयपञ्चमशताब्दीस्थप्रवरसेनकृतं प्राकृतभाषामयं सेतुबन्धं स्मरति, खण्डयति च पञ्चमशताब्दीस्थितस्य भामहस्य मतम्। अतश्चायं क्रिस्तीयपञ्चमशताब्दीतो न प्राचीनः, नापि क्रिस्तुवर्षीयाष्टमशतकप्रथमभागादर्वाचीन इति सिध्यति। प्रायेण चायं क्रिस्तीयषष्ठवर्षशतकोत्तरार्धे बभूवेति विश्वस्यते। तादृशसमयोत्पन्नेन बाणभट्टेन चायं तुल्यकाल इति शंकरविजयकर्ता माधवाचार्यो विश्वसिति। किं च, एकशेषप्रकरणकाशिकां काव्यालंकारसूत्रीयप्रायोगिकाधिकरणं च सूक्ष्मेक्षिकया परीक्षमाणाः, सतृणाभ्यवहार्यादिपदनिष्पत्तिप्रकारतदर्थावबोधसंप्रदा-

यादिकं च विमृशन्तः कतिपये सहृदयाः, काव्यालंकारसूत्रकर्ता वामनो न जयापीडमन्त्री, परं काशिकाकर्ता वामन एवेति साधयन्ति। पाणिनीयकाशिकाकर्ता वामनश्च ६६० इतिसंख्याके क्रिस्तीयसंवत्सरे परलोकं गत इति ह्यूणसाङ्गभिधश्चीनयात्रिको विलिखति। इत्थं च दण्डी क्रिस्तीयषष्ठशताब्दीचरमभागे आसीदिति चिराय बहूनां विश्वासो न खलु युक्तेर्विप्रकृष्ट इत्यपि संभाव्यते। तत्सर्वथा पाश्चात्त्यपण्डितानां दण्डिसमयविषयको विनिर्णयो न विश्वासपदवीमारोहति। अस्य भोजसभास्तारत्वे न किमपि प्रमाणमुपलभामहे। कथाभागसमालोचनया कालनिर्णयस्तु महतीं वैयाकुलीमापादयिष्यति। तथा सति खल्वाद्यत्विकोऽपि कश्चिन्निगूढनामा कृतयुगीयान्धर्मानाचक्षाणः कदाचिद्विमर्शकैस्तादात्विकतामधिरोपितो भविष्यति। एकस्यामेव मालायामुत्तमानि अधमानि च कविकुसुमानि संग्रथितानि पश्यतां भोजप्रबन्धकारादीनां वचनं तु नैतादृशे विषये प्रमाणीभवितुमर्हति। अत्रत्यो वस्तुविस्तरोऽपि बृहत्कथायामस्तीति नात्र कवेः किमपि शिल्पमपेक्षितमित्यपि केचन मन्यन्ते। अस्य दण्डीति व्यपदेशश्च,

> 'ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः
> क्षोणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः।
>
> ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः
> श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः॥'

इति पद्यश्रवणचमत्कृतान्तरङ्गैः पण्डितैः प्रख्यापितः। एवं वस्तुतत्त्वे निर्धारणाविषयमवतरति, बलगलदेशीयताम्रशासनोल्लिखितो दण्डी यः कश्चिदन्यो दण्डीति नूनमगत्याभ्युपगन्तव्यमापतितं भवति। दण्डिकालिदासयोरेककालिकत्वं परस्परं स्पर्धां च कथयतां भारतीयपण्डितानामैतिह्यवादस्तु न पुनः श्रद्धापदं भवितुमर्हति; यतोऽयं दण्डी काव्यादर्शे 'प्रसादवत्प्रसिद्धार्थम्' इति लक्षयित्वा, 'इन्दोरिन्दीवरद्युति। लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः' इत्युदाहरति। 'लक्ष्म लक्ष्मीं तनोति' इत्येतद्वाक्यखण्डं च 'मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति' इति शाकुन्तलपद्यभागात्समुद्धृतं स्यादिति संभावना न खलु नाम न सांप्रतम्। नह्युभयोरेककालिकत्वे संघर्षे च सत्येवमुद्धृत्योदाहरणं स्वरसतः संगतं भवति। सन्ति चैवमनेके

पण्डितानामैतिह्यवादाः सर्वात्मना विश्वासविदूराः, येषु सर्वथा विप्रतिषिद्धं कालिदासभवभूत्योरेककालिकत्वम् 'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इति कालिदासेनैवाभिहितमिति विश्वासेन साधयन्नर्थवादोऽप्यन्तभावमधिगच्छति। तथा च प्रबलयुक्तिप्रमाणप्रतिपन्नः साधितपूर्वः समय एव दाण्डिन इति सिद्धान्तयन्ति।

अत्रेत्थं चिन्तयन्ति—स्यादेतदखिलमप्यभिहितपूर्वमवश्यस्वीकार्यम्, यदि काव्यादर्शकर्तुर्दण्डिनो दशकुमारचरितकर्ता दण्डी विभिन्नो न भविष्यति। तत्रैव खलु महती विप्रतिपत्तिः प्ररोहति। कामं वयं पश्यामः काव्यादर्श इव दशकुमारचरितेऽपि भूयसा शब्दसारल्यम्, संक्षेपसौन्दर्यं च ।अथाप्युभयोरपि भिन्नभिन्नां ग्रन्थकर्तुर्मनोगमनिकामनुभूयमानां न वयमपलपितुं पारयामः। दशकुमारचरिते हि कथाघटनं विमृश्यमानम्, तादृशं वस्तुविस्तरं संग्रथितुमुपक्रममाणस्य कर्तुरतिकठिनामनृजुपथस्वरसवाहिनीं मनोवृत्तिमवगमयति, यां पुनः काव्यादर्शकर्तुः 'आचार्यदण्डी' इत्यखिलैरभिपूज्यमानस्य दण्डिनः संभावयितुमपि वयं संकुचामः। किं च, काव्यादर्शे 'कामं सर्वोऽप्यलंकारो रसमर्थे निषिञ्चतु। तथाप्यग्राम्यतैवैनं भारं वहति भूयसा॥' इति, 'शब्देऽपि ग्राम्यतास्त्येव सा सभ्येतरकीर्तनात्। यथा यकारादि पदं रत्युत्सवनिरूपणे॥' इति च विलिखत आचार्यदण्डिनो मुखात् असभ्यैः पदैरर्थैः संघटनैश्च भूयिष्ठं दशकुमारचरितं निष्पतितमिति न वयं विश्वसिमः। किं च 'कन्ये कामयमानं मां न त्वं कामयसे कथम्। इति ग्राम्योऽयमर्थात्मा वैरस्यायैव कल्पते॥' इति काव्यादर्शे दण्डी विलिखति। स एव 'त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते। स्वपिहि मया सह सुरतव्यतिकरखिन्नैव मा मैवम्॥' इति पद्यं प्रणिनायेति को हि नाम सहृदयः श्रद्दधातु। न खलु वयं चिरस्य परिपश्यन्तोऽपि 'कन्ये कामयमानम्—' इत्यस्मादस्मिन्पद्ये कमपि विशेषमुपलभामहे। किं च, काव्यादर्शे 'भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्' इति विलिखन्नाचार्यदण्डी प्राहुःपदेन बृहत्कथामात्मदृष्टेरगोचरमभिदधाति। दशकुमारचरितस्य तु मूलग्रन्थो बृहत्कथेति विश्वस्यते। किंच, दशकुमारचरिते अप्रसिद्धानि सांकेतिकानि परुषाणि च पदानि नातिदुर्लभानि पश्यामः, यानि केवलं सुप्रसिद्धशब्दभासुरे मृदुलमतीनामपि व्युत्पादनक्षमे काव्यादर्शे भूयसा न दृश्यन्ते। 'ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम्'

इति काव्यादर्शे दण्डी। दशकुमारचरिते तु नैवं गद्यजीवितमोजो दृश्यते। तदेवं सर्वतोऽपि समालोच्यमाने, दशकुमारचरितकर्ता दण्डी काव्यादर्शकर्तुराचार्यदण्डिनो विभिद्यत एवेति निश्चप्रचं सिध्यति। ततश्च काव्यादर्शकर्तुराचार्यदण्डिनः पूर्वोक्तसमयसद्भावनिर्णयेऽपि नास्य दशकुमारचरितकर्तुर्दण्डिनः सोऽयं समयः समर्थितो भवति। अयं हि दण्डी पाश्चात्त्यपण्डितैरूहिते काले वर्तमानो नातीव प्रशंसार्हः कश्चन कविरिति प्रत्ययो बलादस्माकं हृदयमास्कन्दति। किंच, माघेन काशिकावृत्तेः कर्ता वामनः स्मर्यते। माघं तु काव्यालंकारकर्ता वामनः स्मरति। अतस्तावुभावप्यभिन्नाविति केषांचन वादोऽपि न क्षोदक्षम इति।

प्र—दण्डिकृतानां ग्रन्थानां नामानि, आपाततस्तत्प्रतिपाद्यान्विषयांश्च विलिखत।

उ—काव्यलक्षणतद्भेदशब्दार्थगुणशब्दालंकारार्थालंकारयमकतद्भेदप्रहेलिकादिप्रतिपादकः काव्यादर्शो नाम अलंकारग्रन्थः, चतुःषष्टेः कलानां स्वरूपादिनिरूपकः कलापरिच्छेदो नाम प्रबन्धः, दशकुमारचरितं नाम गद्यकाव्यं चास्य दण्डिकवेः कृतय इति मन्यन्ते। केचित्तु च्छन्दोवृत्तादिप्रतिपादिका छन्दोविचितिरनेन कृतेति कथयन्ति। दशकुमारचरितकर्ता दण्डी त्वन्य एवेति पक्षावलम्बिनस्तु 'त्रयो दण्डिप्रबन्धाश्च' इति राजशेखरवचनानुसारेण काव्यादर्शच्छन्दोविचितिकलापरिच्छेदानां कर्ता श्रीमानाचार्यदण्डीति विश्वसन्ति।

प्र—दशकुमारचरितप्रबन्धकथाभागस्य मूलग्रन्थः कः?

उ—बृहत्कथेति विश्वस्यते। बृहत्कथामञ्जरीति केचित्।

प्र—१. पूर्वं भारतवर्षस्य ग्रीकप्रभृतिभिर्देशान्तरैः सह वाणिज्यादिसंव्यवहार आसीत्।

२. वर्णाश्रमाचारव्यवस्था पुरा समीचीना नासीत्।

३. ब्राह्मणानां ब्राह्मणैः सहैव विवाहादिव्यतिकर इति निर्बन्धो न पूर्वमासीत्।

एते विषया दशकुमारचरितग्रन्थान्निरूप्यन्ताम्।

उ—गङ्गोद्भवस्य कालयवनद्वीपगमनवृत्तान्तादिभिः, पूर्वं भारतवर्षस्य देशान्तरैः सह संव्यवहार आसीदिति ज्ञायते।

मातङ्गनाम्नो ब्राह्मणयुवस्य, विन्ध्याटवीमध्यमधिवसतां केषांचन ब्राह्मणजातीयानामाचारादिकमवमृशतामस्माकं पूर्वं वर्णाश्रमाचारादिव्यवस्था न समीचीनासीदित्येव वक्तव्यं भवतीति प्रतिभाति।

तस्यैव मातङ्गस्य यमसदनात्प्रतिनिवृत्तस्य स्वीकृतसत्कर्माचरणस्य पश्चादसुरनन्दिन्याः कालिन्द्याः पाणिग्रहणवृत्तान्तेन, कामपालस्य तारावलीस्वीकारोदन्तेन च विवाहादिव्यतिकरे नातीव निर्बन्ध आसीदित्यूहितुं शक्यते।

प्र—'दण्डिनः पदलालित्यम्' इति प्रवादं निदर्शनैः समर्थयत।

उ—दण्डिनः पदानि प्रायेण ललितमधुराणि। गद्यजीवितमित्युद्घुष्यमाणमपि दीर्घदीर्घसमासस्वरूपमोजोगुणं भूयसासौ दण्डी न परिगृह्णाति। आदित आरभ्य आ समाप्तेरयमेकयैव रीत्या सरलानि वाक्यानि प्रयुङ्क्ते। वाक्यान्यपि न दीर्घदीर्घतराणि। तत्तद्वर्णनावसरेऽपि नायमपरैराश्रितां नितान्तविस्तृततां स्वीकृत्य सहृदयानुद्वेजयति। संक्षिप्तार्था अन्यूनानतिरिक्तपदा चास्य वाक्यसरणिः। कथाघटनचातुर्यमन्यादृशमपि न शब्दार्थयोः कठिनतां प्रयोजयति। अनुप्रासघटनायां श्रद्धालुरप्ययं न वृथा पदजातमुपयुङ्क्ते। सांकेतिकानि पदानि च संदर्भानुसारेण प्रयोक्तव्यान्यासन्निति न तत्र कविरयमपराध्नोति। व्याकरणसंस्कृतानि णिजन्तसन्नन्तलुङन्तादीनि च पदानि नार्थक्लिष्टानि व्युत्पित्सूनामिव व्युत्पन्नानामप्युपकाराय कल्पन्ते। यङ्यङ्लुगन्तप्रयोगस्तु कवेरस्य विद्विष्ट इव लक्ष्यते। निर्बन्धबहुले निरोष्ठ्यवर्णपरिग्रहेऽपि नायं कविः स्वरीतेः प्रभ्रश्यति। तथा खलु तत्राप्यस्य निसर्गतः प्रवहन्ती चकास्ति सरस्वती, यथा निरोष्ठ्यवर्णप्रघट्टकोऽयमित्यनुपदिष्टः कश्चिद्विद्वानपि नात्मना तत्रत्यं तादृशं चातुर्यमवगन्तुमलं भवति। इदं च दशकुमारचरितमत एव गद्यकाव्यावतारप्रथमावस्थायां जायमानस्य वाक्सरणौ स्वाभाविककृत्रिमतारतम्यस्य प्रदर्शकमिति विश्वस्यते। तदेतत्सर्वमालोच्यैव विद्वद्भिः 'दण्डिनः पदलालित्यम्' इति सर्वतोऽप्युद्घुष्यते। 'आर्याः, रूपेणैव परिवृत्तो मम स्वभावः' 'अहं च तया मे धात्र्या सर्वमिदं ममाचेष्टितं रहसि पित्रोरवगमय्य प्रकर्षकाष्ठाधिरूढयोस्तयोः पादमूलमभजे'

'त्वमेवोन्मत्ता, यानुन्मत्त इत्युन्मत्तं मुक्तवती' 'निशम्यैवं स पुमानुपोढहर्षो निर्गत्य कृताञ्जलिराक्रम्य संज्ञासंकुचितं कुञ्जरगात्रमसक्तमध्यरुक्षत्' इत्यादिषु वाक्येषु पदानां संक्षिप्तार्थत्वं लालित्यम् अन्यूनानतिरिक्तत्वं चातितरां प्रशंसामर्हति। 'राजाधिराजनन्दन, नगरन्ध्रगतस्य ते गतिं ज्ञास्यन्नहं च गतः कदाचित्कलिङ्गान्' इति निरोष्ठ्यवर्णघटितवाक्यस्यासाधारणं किल स्वाभाविकप्रसरणमतिलालित्यं च। किं बहुना—अभिहितपूर्वाणामनेकेषां गुणानां प्रायेण सर्वाण्यपि वाक्यानि नियतमुदाहरणभावमर्हन्ति।

प्र—अत्र शब्दतोऽर्थतश्च कालिदासस्यानुकरणमस्ति वा? अस्ति चेत्, द्वित्राण्युदाहरणानि प्रदर्श्यन्ताम्।

उ—'पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम्' इति रघुवंशे कालिदासः। 'तमुपोषिताभ्यामिव अनिमिषिताभ्यां लोचनाभ्यां पिबन्ती' इति दशकुमारचरिते दण्डी। 'संबन्धमाभाषणपूर्वमाहुः' इति कालिदासः। 'ननु सतां सख्यस्याभाषणपूर्वतया' इति दण्डी। 'भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः' इति कालिदासः। 'भवानेव भाविन्यपि जन्मनि वल्लभो भवतु' इति दण्डी। 'इतः परानर्भकहार्यशस्त्रान्' इति रघुः। 'स्त्रीबालहार्यशस्त्रम्' इति दशकुमारचरितम्। 'लतावलय, संतापहर, आमन्त्रये त्वां भूयोऽपि परिभोगाय' इति शाकुन्तले दुष्यन्तं प्रति शकुन्तलाया गूढोक्तिः; दशकुमारचरितेऽपि 'राजहंसकुलतिलक, विहारवाञ्छया केलीवने मदन्तिकमागतं भवन्तमकाण्ड एव विसृज्य मया समुचितामिति जनन्यनुगमनं क्रियते। तदनेन भवन्मनोरागोऽन्यथा मा भूत्' इति राजवाहनमुद्दिश्य अवन्तिसुन्दर्या गूढमुच्यते। अतः कालिदासानुकरणमत्रास्तीति भाति।

प्र—'पूर्वपीठिका दण्डिना न कृता' इति केचन मन्यन्ते। अत्र साधिका बाधिका वा युक्तीरुद्भावयत।

उ—पूर्वपीठिका दण्डिना न कृतेति वादिनामयमभिप्रायः—पूर्वपीठिकायां हि 'वीरभटपटलोत्तरङ्ग . . . . . . . भुजदण्डः' 'पुरन्दरपुराङ्गण . . . . . जेगीयमानया' 'शरदिन्दुकुन्दघनसार . . . . . नीकाशमूर्त्या' 'किंचिद्विकसदिन्दीवर . . . . . . . . सलिलललितानि'

इत्येवं दीर्घदीर्घाणि समस्तानि पदानि श्रूयन्ते । नह्येतादृशाः शब्दा उत्तरोच्छ्वासेष्वालक्ष्यन्ते । '. . . . नीकाशमूर्त्या विरचितादिगन्तराल-पूर्त्या कीर्त्याभितः सुरभितः' 'विग्रहः सविग्रह इव साग्रहः' 'मालव-नाथो जयलक्ष्मीसनाथो मगधराज्यं प्राज्यम्' 'कोऽपि रूपी कोप इव व्याघ्रः शीघ्रं मामाघ्रातुमागतवान्' 'कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेन यानेनाभ्युदयाशंसं राजा-नमकार्षुः' इत्येवमादीन्यनुप्रासयमकशृङ्खलितानि वाक्यानि यथा पूर्वपीठि-कायां सुलभानि, न तथोत्तरभागे। उत्तरपीठिकायां च न खल्वनावश्य-कानि पदानि वाक्येष्वन्तर्भवन्ति । पूर्वपीठिकायां तु विशिष्य न कम-प्यर्थविशेषमवबोधयन्ति केवलमनुप्रासरक्षणैकदीक्षितानि पदकदम्बकानि बहुशः प्रयुक्तान्युपलभामहे । न खलु वयम् 'भवतः पराजयमनुभूय वैलक्ष्यलक्ष्यहृदयो वीतदयो महाकालनिवासिनम्—' इत्यत्र वीतदयपदस्य, 'मया सविनयं सत्कृता स्वक्षी यक्षी साप्यदृश्यतामयासीत्' इत्यत्र स्वक्षी-शब्दस्य, 'रुषा भस्मीकृतारयो रयोपहसितसमीरणाः' इत्यस्मिन्वाक्ये रयोपहसितसमीरणपदस्य च शब्दालंकारसंपादनात् ऋते अन्यत्किमपि प्रयोजनं पश्यामः । किं च, वसुमत्याः प्रत्यवयवं वर्णने यादृशी रीतिः तादृश्येव अवन्तिसुन्दर्याः, कल्पसुन्दर्याश्च वर्णने समुपलभ्यते । न ह्येवमेक एव कविरेकामेव रीतिमाश्रित्य त्रिषु प्रकरणेषु वर्णयिष्यति । अतश्च पूर्व-पीठिकेयमन्येनैव केनापि विरचितेति विश्वसनीयं भवति। पूर्वोत्तरकथयोः सुश्लिष्टतायै दण्डिनः शिष्येण चक्रपाणिनाम्ना केनापि कविनेयमरचीति च किंवदन्ती । तथा च आवसानिकवस्तुसंघटनाय पद्मनाभो नाम कश्चि-न्नवममुच्छ्वासं व्यलिखदिति श्रूयते, दृश्यते चायं मुद्रितो नवम उच्छ्वासः अतः पूर्वोत्तरभागयोर्विभिन्नकर्तृकतैव युक्तेति ।

अन्ये तु—उत्तरस्मिन् भागेऽपि द्वितीयोच्छ्वासादौ राजकन्याशयन-स्वभाववर्णनादिप्रकरणेषु दीर्घदीर्घाणि समस्तानि पदानि संदृश्यन्त एव । 'पातितश्च कोपितेन कोऽपि तेन मयि शापः' इत्यादिषु वाक्येषु उत्तर-भागेऽपि शब्दालंकारपरिग्रहादरः परिदृश्यते। वाक्यसारल्यं तु उभयोरप्ये-करूममेव पश्यामः । शब्दतोऽर्थतश्च पूर्वोत्तरयोर्भागयोस्तथा नाम सुश्लि-ष्टता समुपलभ्यते, या पुनर्विभिन्नकर्तृकतायां सर्वथा दुर्लभा भवति ।

व्यर्थानि च पदान्युत्तरभागेऽपि गवेष्यमाणानि न खलु नाम न सुलभानि। ऐतिह्यादिकं त्वकिंचित्करम्। कालिदासीयादिष्वपि काव्येष्वेकमेव वर्णनमसकृदायोजितं पश्यामः। अतो वयमुभयोरपि भागयोरेकमेव कविमभिमन्यामह इति वदन्ति।

प्र—दशकुमारचरिते अपि नाम यत्रकुत्रचित् पदे वाक्ये च दोषो विद्यते? विद्यते चेत्, तादृशानि कतिचनोदाहरणानि विलिखत।

उ—तत्र क्वचित्पदे, क्वचन वाक्ये च च्युतसंस्कारो दोषः, दोषान्तराणि च समुपलभ्यन्ते। इमानि तानि पदानि वाक्यानि च—'महदायुधनैपुण्य' 'विरच्य' 'विन्ध्यवनमध्यं निवसति' 'अवोचि' 'महदभिख्याः' 'कालभोगिनाहमदंशि' 'घनशब्दोन्मुखी चातकी वर्षागमनमिव तवालोकनकाङ्क्षिणी चिरमतिष्ठम्' 'गमिष्णुः' 'महदाशापूर्णमानसः' 'करिष्णुः' 'अवगाहनसाहासिकाम्' 'अवोचिषम्' 'पैतृष्वस्रेयौ' 'परीक्षन्' 'लोचनपथमवर्तत' 'परेद्युः' 'पितरावपि तावन्मां न संविदाते' एवमन्यत्रापि सूक्ष्मेक्षिका करणीया। एतेषु केषांचन कथंचित्समर्थनमपि शक्यते कर्तुम्।

प्र—दश कुमारान्नामतो निर्दिश्य, यथासंभवं तेषां राजहंससमीपप्राप्तिप्रकारं वर्णयत।

उ—राजवाहनः, प्रमतिः, मित्रगुप्तः, मन्त्रगुप्तः, विश्रुतः, उपहारवर्मा, अपहारवर्मा, पुष्पोद्भवः, अर्थपालः, सोमदत्तः, इति दश कुमाराः। अत्र आद्याः पञ्च राजहंसावासस्थल एव प्रसूता इति ते तत्रैव वर्तन्ते। उपहारवर्मा तु केनचित्तापसेन राजहंससविधमानीतः, योऽयं तापस उपहारवर्मधात्रीवचनानुरोधेन तमेनमन्विष्यन्, कस्मिंश्चन चण्डिकामन्दिरे देवताबलित्वेन निर्णीतवतः किरातानननुनीय, समासादयामास। जनपतिरेकस्मिन् दिवसे तीर्थस्नानाय गच्छन्, कस्याश्चन शबर्या अङ्कशायिनं कंचन बालकमवलोक्य, मुनिकथितो द्वितीयोऽयं राजकुमार इति निश्चित्य, तां सामदानाभ्यामनुनीय परिगृहीतं तमेनं बालकम् 'उपहारवर्मा' इत्याख्यातवान्। कदाचिद्वामदेवशिष्यः सोमदेवशर्मा, धात्र्याः करात्पतितं कण्ठीरवहन्यमानेन गजेन वियति दूरतः समुत्क्षिप्तं मर्कटेन च केनचिच्छाखायां विनिक्षिप्तं

रत्नोद्भवसूनुं पुष्पोद्भवं राजहंसाय समर्पयामास । अन्येद्युः कामपालपत्नी यक्षी रात्रौ वसुमतीमुपस्थाय तत्पुत्रमर्थपालं समर्प्य गता। वसुमती राजानमेनं कुमारमदर्शयत् । ततः परस्मिन् दिवसे वामदेवान्तेवासी तीर्थयात्राप्रसङ्गेन कावेरीतीरं गतः, तत्र कस्यांचन स्थविरायां कालभोगिविषावेगेन मृतायाम्, तदुत्सङ्गतले स्थितं सोमदत्तं नाम सत्यवर्मणः कुमारमानीय राजहंसाय प्रददौ ।

प्र—राजवाहनस्य दिग्विजययात्राकाले कति वयांसि स्युः? कथं निर्णेतुं शक्यते?

उ—अत्र दशापि कुमाराः प्रायेण सवयस्का इति संभाव्यते; यतः 'एवं मिलितेन कुमारमण्डलेन बालकेलीरनुभवन्' इति उत्तरत्र राजवाहनो निरूप्यते । तेषामन्यतमस्य पुष्पोद्भवस्य षोडशं वय इति ज्ञायते। पुष्पोद्भवो हि सिद्धतापसस्यादेशादरेण षोडश हायनानि कथंचिन्नीत्वा दुःखस्य पारमनवेक्षमाणं गिरिपतनं कुर्वन्तं स्वपितरं ददर्श । ततो बन्धुपालवचनानुसारेण त्रिंशद्दिवसानन्तरमेव राजवाहनमद्राक्षीदिति कथ्यते। ततश्च दिग्विजययात्राकाले राजवाहनस्य आसन्नषोडशानि अधिकषोडशानि वा वयांसि स्युरिति संभाव्यते ।

---

## मध्यमशाखायां तृतीयकक्ष्या ।

### नैषधीयचरितम् ।

प्र—नैषधकाव्ये कति सर्गाः?

उ—द्वाविंशतिः सर्गाः ।

प्र—अस्य कथाभागस्य मूलग्रन्थः कः?

उ—महाभारतम् । तत्र हि वनपर्वणि नलोपाख्यानमनुश्रूयते ।

प्र—अस्मिन्काव्ये नैषधीयं चरितं कियदवधि निरूपितं कविना?

उ—दमयन्त्याः स्वयंवरमहोत्सवानन्तरं तया सह इन्द्रियार्थाननुसेवमानस्य राज्ञो नलस्य चन्द्रोदय आसीदित्येतावत्पर्यन्त एव वस्तुविस्तरोऽत्र काव्ये कविना समुपनिबद्धः ।

प्र—अनेन श्रीहर्षेण कृताः के के ग्रन्था नैषधकाव्यतो ज्ञायन्ते?

उ—कतिपयसर्गसमाप्तिपद्यपर्यालोचनया, स्थैर्यविचारणप्रकरणम्, श्रीविजयप्रशस्तिः, खण्डनखण्डः, गौडोर्वीशकुलप्रशस्तिः, अर्णववर्णनम्, छिन्दप्रशस्तिः, शिवशक्तिसिद्धिः, नवसाहसाङ्कचम्पूः, इत्येते ग्रन्थाः कृता इति ज्ञायन्ते।

प्र—एतादृशकठिनकाव्यनिर्माणे किं फलमभिमन्यते कविः?

उ—गुरुकुलविमुखानां प्राज्ञंमन्यानां पराभवो भवत्विति कवेरान्तरोऽभिसंधिः। तथा चोच्यते ग्रन्थान्ते स्वयमेव कविना—

'ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञंमन्यमना हठेन पठिती मास्मिन्खलः खेलतु।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः॥' इति।

प्र—अस्य काव्यस्य अङ्कः कः?

उ—प्रतिसर्गमन्तिमे पद्ये आनन्दपदम् अङ्कतया निवेश्यते।

प्र—श्रीहर्षस्य जीवनसमयादिकं संग्रहेण लिखत।

उ—श्रीहर्षोऽयं श्रीहीरपण्डितान्मामल्लदेव्यां जज्ञे। स च चिन्तामणिमन्त्रप्रभावेण सकलास्वपि विद्यासु परं प्रावीण्यमुपययौ। कान्यकुब्जाधिपतेर्जयन्तचन्द्रस्य च सभायां स्वपितृजेतारमुदयनं पराजित्य सर्वैरपि सत्कृतोऽभवत्। कान्यकुब्जाधिपतेर्बहुमानचिह्नतया ताम्बूलद्वयम् आसनं चायमलभत। कदाचिदस्य कश्मीरान्गतस्य नैषधीयचरितमिदं काव्यं तत्र सरस्वतीपीठप्रतिष्ठिता देवी भगवती नितरां प्रशशंस। कान्यकुब्जेश्वरो जयन्तचन्द्रश्च ११६९ इतिसंख्याके क्रिस्तीये वत्सरे किमपि दानपत्रं विलिलेखेति प्राचीनलेखमालानुशीलनेन ज्ञायते। ततश्च श्रीहर्षोऽयं क्रीस्तीयद्वादशशताब्द्युत्तरार्धान्नार्वाचीन इति निश्चेतव्यं भवति।

प्र—श्रीहर्षस्य कवितां गुणदोषाभ्यां विमृशत।

उ—श्रीहर्षस्य कविता न प्रसन्नमधुरा, नापि प्रसन्नगम्भीरा, नवा ओजस्विनी, न च कान्तिमती। नालिकेरपाकाश्लिष्टाया अस्याः कविताया

अर्थव्यक्तिर्नाम गुणः सुदूरमगोचरः । शब्देषु न श्रव्यता, नाप्यर्थेषु भव्यता । अन्वयगतिश्च क्लिष्टा, वर्णनापद्धतिरपि बहुत्र दुष्टा । पदानि चास्य कवेर्न भूयांसि, प्रयुक्तानि च तानि भूयसा न श्रेयांसि । सर्वत्र च स्वीयपाण्डित्यदर्शनम्, तदेव च भवति सारल्यकर्शनम् । बालव्युत्पादने च नास्य महती श्रद्धा, अत एव भवति कवितापि निर्बद्धा । शब्दालंकारेषु चानुप्रासयमकादिषु भूयानादरोऽस्य परिदृश्यते । अर्थालंकारेषु च उत्प्रेक्षातिशयोक्तिश्लेषेषु विशेषेणास्य पक्षपातमवगच्छामः । बहुत्र चोत्प्रेक्षामतिशयोक्तिं च न हृदयंगमामवलोकयामः । पदार्थे वाक्यरचनं प्रौढिगुणमभिमन्यमाना आलंकारिकास्तु,

'दयासमुद्रे स तदाशयेऽतिथीचकार कारुण्यरसापगा गिरः ।'

'सरसीः परिशीलितुं मया गमिकर्मीकृतनैकनीवृता ।
अतिथित्वमनायि सा दृशोः सदसत्संशयगोचरोदरी ॥'

'तच्छंसिते किंचन संशयालुर्गिरा मुखाम्भोजमयं युयोज ।'

'भवद्वियोगाभिदुरार्तिधारायमस्वसुर्मज्जति निःशरण्यः ।
मूर्च्छामयद्वीपमहान्ध्यपङ्के हा हा महीभृद्भटकुञ्जरोऽयम् ॥'

इत्यादिदर्शनेन नूनं प्रसन्नमनसो भविष्यन्ति ।

'अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम् ।'

'किमस्य लोम्नां कपटेन कोटिभिर्विधिर्न लेखाभिरजीगणद्गुणान् ।
न रोमकूपौघमिषाज्जगत्कृता कृताश्च किं दूषणशून्यबिन्दवः ॥'

'प्रियासु बालासु रतक्षमासु च द्विपत्रितं पल्लवितं च बिभ्रतम् ।
स्मरार्जितं रागमहीरुहाङ्कुरं मिषेण चञ्चोश्चरणद्वयस्य च ॥'

'रेखाभिरास्ये गणनादिवास्य द्वात्रिंशता दन्तमयीभिरन्तः ।
चतुर्दशाष्टादश चात्र विद्या द्वेधापि सन्तीति शशंस वेधाः ॥'

इत्यादिषु उत्प्रेक्षा सहृदयमनोरमेति न प्रतिभाति । एवमेव बहुत्र निरवलम्बना अतिशयोक्तिरुत्प्रेक्षा, श्लेषकदर्थना च सुलभा दृश्यते । कवेरस्य तत्तद्दर्शनसिद्धान्तवेदितां तु एकैकोऽपि प्रघट्टकः स्फुटमवगमयत्यस्मान् । शास्त्रीयं वर्त्म रेखामात्रमप्यनतिवर्तमानमलंकारसंकरयोजनं तु नितरामलंकारलाक्षणि-

केभ्यो रोचेत । व्युत्पित्सुभ्योऽपि व्युत्पन्नानामेवेदमतितरामनेकैरंशैरुपकरोतीति प्रतिभाति । 'नैषधं विद्वदौषधम्' इति च पण्डितानां प्रबलः प्रवादः ।

प्र—श्रीहर्षस्य अद्वैतसिद्धान्ते पक्षपात इति ऊहितुं शक्यते वा? शक्यते चेत्, कथम्?

उ—'किमपि ज्योतिरबाह्यमिज्यते'

'प्रापुस्तमेकं निरुपाख्यरूपं ब्रह्मेव चेतांसि यतव्रतानाम् ।'
'हंसं तनौ संनिहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकायाम् ।'
'यत्रान्धकारः किल चेतसोऽपि जिह्मेतरैर्ब्रह्म तदप्यवाप्यम् ।'
'श्रुतः स दृष्टश्च हरित्सु मोहात् ध्यातश्च नीरन्ध्रितबुद्धिधारम् ।'
'सदसत्संशयगोचरोदरी'
'अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः ।
वचसामपि गोचरो न यः सतमानन्दमविन्दत द्विजः ॥'

इत्यादिपद्येषु शब्दतोऽर्थतश्च विमृश्यमानेषु, कवेरस्य वेदान्ते विशिष्य अद्वैतमते पक्षपातोऽस्तीत्यूहितुं शक्यत इति वदन्ति ।

प्र—उद्यानवर्णनायां तटाकवर्णनायां च न्यूनता कापि स्फुरति वा? सकारणं प्रत्युत्तरं लिखत ।

उ—उद्यानवर्णनाप्रकरणे हि केतकीपुष्पम्, दाडिमफलम्, पलाशपुष्पम्, चम्पकपुष्पम्, कुसुमपरागः, स्थलपद्मिनी, मुकुलितो रसालसालः, चाम्पेयम्, नागकेसरम्, मालूरफलम्, पाटलास्तबकः, कोरकितो मुनिद्रुमः, नभस्वन्तः, द्रुमाः, अहर्महः, पिकः, पल्लवितोऽशोकः, शुकाः, इत्येतानि वर्णितानि वस्तूनि । अत्र पुष्पवर्णनमध्ये फलस्य प्रवेशः, वृक्षविशेषनिरूपणावसरे तत्सामान्यवर्णनम्, तन्मध्ये च नभस्वदहर्महःपिकानां योजनं च क्रमतो विहीनं विषमनिबद्धं माल्यमिव हृदयंगमं न भवति ।

तटाकवर्णनाप्रकरणे च 'निलीय तस्मिन्निव सुत्रपां निधिर्वने तटाको ददृशेऽवनीभुजा' इति समुद्रत्वेन प्रथममुत्प्रेक्षितस्तटाकः । अनन्तरं त्रिभिः पद्यैः समुद्रतटाकयोः साधर्म्ये सति निरूपितस्य व्यतिरेकस्य

'रथाङ्गभाजा कमलानुषङ्गिणा—' इत्याद्युत्तरपद्येष्वनिर्वाहः, अल्पसरोऽर्थकस्य पल्वलशब्दस्य 'पयोधिलक्ष्ममुषि केलिपल्वले' इति तादृशे तटाके प्रयोगव्याघातश्च न्यूनतेति केचिदभिमन्यन्ते ।

प्र—नैषधीयकाव्ये पौनरुक्त्यमस्ति वा? अस्ति चेत्, तत्र कतिपयान्युदाहरणानि प्रदर्श्य, शक्यते चेत्, तं दोषं परिहरत ।

उ—'निपीय यस्य क्षितिरक्षिणः कथा-
स्तथाद्रियन्ते न बुधाः सुधामपि ।
नलः सितच्छत्रितकीर्तिमण्डलः
स राशिरासीन्महसां महोज्ज्वलः ॥' (१-१)

'रसैः कथा यस्य सुधावधीरणी
नलः स भूजानिरभूद्गुणाद्भुतः ।
सुवर्णदण्डैकसितातपत्रित
ज्वलत्प्रतापावलिकीर्तिमण्डलः ॥' (१-२)

इत्यनयोः,

'स्वकेलिलेशस्मितनिर्जितेन्दुनो
निजांशदृक्तर्जितपद्मसंपदः ।
अतद्द्वयाजत्वरसुन्दरान्तरे
न तन्मुखस्य प्रतिमा चराचरे ॥' (१-२३)

'सरोरुहं तस्य दृशैव निर्जितं
जिताः स्मितेनैव विधोरपि श्रियः ।
कुतः परं भव्यमहो महीयसी
तदाननस्योपमितौ दरिद्रता ॥' (१-२४)

इत्यनयोः,

'लिलिहे स्वरुचा पताकया निशि जिह्वानिभया सुधाकरम् ।
श्रितमर्ककरैः पिपासु यन्नृपसद्मामलपद्मरागजम् ॥' (२-१००)

'स्वरुचारुणया पताकया दिनभर्कोण समीयुषोत्तृषः ।
लिलिहुर्बहुधा सुधाकरं निशि माणिक्यमया यदालयाः ॥'
(२-९९)

इत्यनयोश्च पौनरुक्त्यं परिस्फुरति; तथा

'अहेलिना किं नलिनी विधत्ते
सुधाकरेणापि सुधाकरेण ।' (३-८०)

इत्यत्रापि तदस्ति । अत्र आद्ये– 'पूर्वश्लोके सुधासितच्छत्रे अविशेषेणोक्तं अत्र तु विशेषेणेत्यपौनरुक्त्यम् । एवमन्येष्वपि पद्येषु विशिष्टार्थप्रतिपादनादपौनरुक्त्यं द्रष्टव्यम्' इति व्याख्याता नारायणः । अत्र नलस्य पूर्वश्लोकोक्तसत्तानुवादेन गुणाढ्यत्वविधेर्नपौनरुक्त्यम् । इह कीर्तेरातपत्रत्वरूपं पूर्वश्लोकोक्तमपि सुवर्णदण्डवैशिष्ट्यादस्याप्यपूर्वत्वाद्वैचित्र्यविशेषः' इति तत्रैव मल्लिनाथः । द्वितीये तु––'पूर्वोक्तमर्थं पुनरप्याह' इति वदन्नारायणः 'उक्तमेवार्थं भङ्ग्यन्तरेणाह' इति लिखन्मल्लिनाथश्च भङ्ग्यन्तरं विनैव पौनरुक्त्यदोषदार्ढ्यमवगमयतः । तृतीयेऽपि––'पूर्वोक्त एवार्थो जिह्वापदप्रक्षेपेण वर्णितः' इति नारायणः; 'अथानयैव भङ्ग्या राजभवनं वर्णयति' इति मल्लिनाथः । चतुर्थे पुनः––'सुधाकरपदं प्रथमं यौगिकम्; द्वितीयमयौगिकमिति न पुनरुक्तिः' इति नारायणः । सहृदयास्तु पूर्वोक्तयोर्व्याख्यात्रोः शिशुरोदनप्रशमनप्रयासकल्पेन जल्पेन तृप्तिमप्रतिपद्यमानास्तत्र तत्र पुनरुक्तिदोषमेव पश्यन्ति ।

---

## मध्यमशाखायां तृतीयकक्ष्या ।

### विश्वगुणादर्शः ।

प्र––विश्वगुणादर्शकर्ता वेङ्कटाध्वरी कदा जीवति स्म ।

उ––क्रिस्ताब्दीयस्य सप्तदशशतकस्यान्तिमे भागे समुत्पन्नोऽयं कविरिति विश्वसन्ति ।

प्र––अनेन कृतानि ग्रन्थान्तराणि नाम्ना निर्दिशत ।

उ––साहित्ये––वरदाभ्युदयचम्पूः, प्रद्युम्नानन्दनाटकम्, लक्ष्मीसहस्रम्, श्रीनिवाससहस्रम्, सुभाषितकौस्तुभः, यादवराघवपाण्डवीयम्,

मीमांसायाम्– मीमांसामकरन्दः, विधित्रयपरित्राणम्,

न्यायतन्त्रे––मणिसारखण्डनम् .